भास्वद्वियोगतश्चन्द्रो यावतैति रविं पुनः ।
स्यात् तावानैन्दवो मासस्तिथीनां त्रिंशता च सः ॥ १७॥
तत्पूर्वोत्तरपक्षौ तु स्वतः सिद्धौ सितासितौ ।
कृत्तिकादिवन्द्वगतात् पूर्णेन्दोः कार्त्तिकादयः ॥ १८ ॥
त्रिधा मासा उपान्त्यान्त्यप्रथमास्तु(१) त्रयोऽत्र हि ।
पितरश्चन्द्रबिम्बस्था अग्निष्वात्तादयो रविम् ॥ १९ ॥
उदितं कृष्णपक्षार्धे पश्यन्त्यन्यत्र चास्तगम् ।
अहोरात्रं तत् पितॄणां चान्द्रो मासः प्रकीर्त्यते ॥ २० ॥
मासपक्षावसाने तु तद्दिवारात्रिमध्यमौ ।
संक्रान्त्या सौरमासस्तु मासद्वयमृतुर्भवेत् ॥ २१ ॥
वर्षं षडृतवो दिव्यमहोरात्रं च तन्मुने ।
कपित्थाकारभूगोलमध्यगो मेरुपर्वतः ॥ २२ ॥
नानारत्नचयो हैम उभयत्र विनिर्गतः ।
तस्योपरिष्टात्सेन्द्रामरास्तस्मान्महर्षयः ॥ २३ ॥
अधस्तादसुरास्तद्वन्महाबलपराक्रमाः ।
ग्रहो मेषायने प्रोद्यत्संचरन्नुदगुत्तरम् ॥ २४ ॥
पूरयेत् प्रागहर्मध्यं देवानामृतुभिस्त्रिभि.(२) ।
याम्यायनाद्यैस्त्रिगृहैरह्नः पश्चार्धमेव सः ॥ २५ ॥
तथा तुलाद्यैर्दैत्यानामपि सौम्यायनादिभिः ।

---

(१) उपान्त्यौन्त्यपञ्चमास्तु—पा० १–२ पु० ।
(२) राशिभिस्त्रिभिः—पा० २ पु० ।

सुरासुराणामन्योन्यमहोरात्रं विपर्ययात् ॥ २६ ॥
दिवारात्रिप्रमाणं च भानोर्भगणपूरणात् ।
विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ॥ २७ ॥
तत् त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ।
तुलादिषडशीत्यंशैः षडशीतिमुखं दिनम् ॥ २८ ॥
तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु ।
षड्विंशे धनुषो भागे द्वाविंशे निमिषस्य च ॥ २९ ॥
मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे ।
तत शेषाणि कन्यायां यान्यहानि तु षोडश ॥ ३० ॥
क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ।
यत्र क्षेत्रे भवेत्तस्य षडशीतिमुखं(१) दिनम् ॥ ३१ ॥
षडशीतिमुखं नाम तस्य क्षेत्रस्य कीर्त्यते ।
सौम्ययाम्यायने यत् स्यात् क्षेत्रं तदयनाभिधम् ॥ ३२ ॥
त्रिशङ्काये मध्यदेशा(२)दुपरिष्टाद्दिवाकर.(३) ।
तुलामेषायने यान्ति ग्रहा यद्विषुवञ्च तत् ॥ ३३ ॥
चरस्थिरद्विस्वभावफलैस्ते च मृगादयः ।
शिशिरादिगुणैर्द्दष्टैः पुनश्च शिशिरादयः ॥ ३४ ॥
स्थिरं विष्णुपदं चेति तन्नाम स्थिरभं स्मृतम् ।
मेषचैत्रादिमासास्तु मध्वाद्या इति कीर्तिताः ॥ ३५ ॥

(१) भवेदेतत् षडशीतिमुख—पा० १ पु० ।
(२) मध्यशृङ्गा—पा० १ पु० । (३) विवस्वतः—पा० १ पु० ।

क्वचिद्दैतैर्वसन्तादा यजमानेच्छया पुनः ।
संपरोद्न्वितादास्तु(१) वत्सराः प्रभवादयः ॥ ३६ ॥
प्रमाथी प्रथमं वर्षं सौरं कल्पस्य सर्वदा ।
दिव्यैरहोभिर्मासैर्वा वर्षज्ञानं पुरोक्तवत् ॥ ३७ ॥
दिव्याब्दानां सहस्राणि द्वादशैव चतुर्युगम् ।
युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः ॥ ३८ ॥
क्रमात् कृतयुगादीनां षष्ठांशः सन्ध्ययः स्वकाः ।
युगेषु तत्र(२) वर्तन्ते गतागतयुगस्थितौ ॥ ३९ ॥
कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया ।
सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् ॥ ४० ॥
चतुर्युगाणां सैका स्यात् सप्ततिर्मनुसञ्ज्वरः ।
कृताब्दसंख्या तस्यान्ते संविधाने जलप्लवः ॥ ४१ ॥
मन्वन्तरव्यवस्थेयं प्राजापत्यमुदाहृतम् ।
कल्पे ससन्धयो ज्ञेया मनवस्ते चतुर्दश ॥ ४२ ॥
कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः ।
इत्थं युगसहस्रेण भूततारादिमानकः ॥ ४३ ॥
संहारकारकः कल्पः कथितस्तव नारद ।
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ॥ ४४ ॥
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ।

---

(१) सपरोदान्विदायास्तु—पा० १-२ पु० ।
(२) युगपत् तत्र—पा० १पु ।

यावद्ब्रह्माखिलं विश्वं तावत् तिष्ठति तिष्यति' ॥ ४५ ॥
शतायुः पुरुषः सर्वः स्वयाऽहोरात्रसंख्यया ।
ग्रहर्क्षदेवदैत्यादि प्रतिकल्पं चराचरम् ॥ ४६ ॥
क्षताद्रिवेदैर्दिव्याब्दै शतघ्नै ४७४०० सृज्यते मया ।
ज्यापिण्डमध्ये परिधिक्रमेण लवणार्णव. ॥ ४७ ॥
मेखलावस्थितस्तस्या देवासुरविभागकृत् ।
योजनानां शतं त्रिंशद्युतं तस्यापि विस्तरः ॥ ४८ ॥
तन्मध्ये तुल्यभागे तु स्वर्णप्राकारतोरणा ।
चतस्र एताः पूर्वाद्या नगर्यो देवनिर्मिता ॥ ४९ ॥
यमकोटिश्च लङ्का च रोमकं सिद्धपुर्यपि ।
उपरिष्टाद्व्रजत्यासां भचक्रं ग्रहसयुतम् ॥ ५० ॥
विशेषाद्विषुवत्यर्कस्तन्नाम्ना विषुवत्प्रभा ।
पुष्करद्वीपमध्यस्थे महापुष्करभूधरे ॥ ५१ ॥
तिष्ठता सिद्धपुर्यां तु ग्रहाः संस्थापिता मया ।
कल्पादौ सृष्टिकाले तद्गुर्वेव तदादिषु ॥ ५२ ॥
मध्योदयार्धरात्र्यस्तकाले वारः प्रजायते ।
तदा पश्चान्मुखं सर्वं ग्रहनक्षत्रतारकाः ॥ ५३ ॥
सृज्यन्ते खाभ्रभूपक्षिकासुभि. २१६००(१) साधनोद्भवैः ।
ग्रहनक्षत्रताराणां समोद्गमनकारणात् ॥ ५४ ॥

---

(१) सृजन्तेमामभूरादेष्वसुभि —पा० १ । २५० ।

पूर्वोक्तासुदिनं त्रिंशन्नाडिकं नक्तमप्यथ ।
विषुवत्युदयस्थानात् प्राक्प्रत्यक्पश्चिमोत्तराः(१) ॥ ५५ ॥
प्राग्दक्षिणयेन ककुभस्मात्तस्य विनिर्दिशेत् ।
एवमुक्तापुरीभ्योऽयमुत्तरो मेरुरामरः ॥ ५६ ॥
असुरो दक्षिणः याम्या नियमो न तयोः समः ।
लिप्तासु चक्रतुल्यासु दृश्यते सकलं यदि ॥ ५७ ॥
विषुवद्दिवसे भूस्थे तावतीने कुतो दिशः ।
इति पर्यटतां यो यद्याति यद्यद्दुड्न्यपि ॥ ५८ ॥
अतीत्य तरसा याति यत्प्रत्यक् प्राग्गतिश्च सा ।
तुल्यमेवातिक्रमणं तावत्याऽथ(२) स्वकक्षया ॥ ५९ ॥
ऊर्ध्वं तत्परिवर्तेन पौष्णान्ते भगणः स्मृतः ।
सर्वेच्छाफलवधे प्रमाणाप्तं च तत् फलम् ॥ ६० ॥
आत्येच्छामानसाम्यं दोःकोटिवर्गयुते. पदम् ।
कर्णो दशपदाभ्यस्तो विष्कम्भात् परिधिर्भवेत् ॥ ६१ ॥
हानिवृद्धिधिया मार्गं व्यत्ययादिष्टमिष्टतात् ।
युगे खुः प्राग्गतेर्भानोर्जस्य शुक्रस्य चात्मग ॥ ६२ ॥

क्षुशार्किगुरुसौम्यानां
भगणाः सूर्यवत्सराः ४३२०००० ।

---

(१) प्राचीन पश्चिमादय —पा० १ पु० ।
(२) तवतिर्वां—पा० १ पु० ।

प्राग्गतेः सूर्यमन्दस्य
सप्तक्वञ्जरपावका. ३८७ ॥ ६८ ॥
कौजात् कृतनखा २०४ नाग-
षड्गुणाः३६८खवियन्नव ९०० ।
शरपावकबाणाश्च ५३५
तथा नवकृताशनाः ३९ ॥ ६९ ॥
अष्टाग्नीभाद्रिविकृति-
द्व्यष्टबाणेन्दवो १५८२२३७८२८युगे ।
भोदयाः प्राग्गतेरेते
भगणैस्तु विवर्जिताः ॥ ७० ॥
पातानां भगणैर्युक्ता उदयास्तस्य कोर्त्तिताः ।
नक्षत्रोदयतः पूर्वं प्रत्यग्गतिरुदेति हि ॥ ७१ ॥
पश्चात् प्राग्गतिरेतस्मा-
दधिकल्पोदया युगे ।
अर्कोनचन्द्रभगणाः
शशिमासाः प्रकीर्तिताः ५३४३३३६ ॥ ७२ ॥
दिनीकृतास्ते तिथयो १६०३०००८०
भूदिनोना १५७७९१७८२८ क्षयक्षपाः २५०८२२५२।
अर्केन्दुमासविश्लेषो
भवेत् १५९३३३६ पुत्त्राधिमासकाः ॥ ७३ ॥

अत्र चक्रकलाश्चन्द्रकक्षा पञ्चदशाहताः ३२४००० ।
व्योमकक्षा भवेदेषा कल्पेन्दुभगणाहता ॥ ७४ ॥
कक्षा ग्रहाणां सैवेह हृता चैव पृथक् पृथक् ।
स्वकल्पभगणैः कक्षाषष्टिभिर्भ्रमणं रवे ॥ ७५ ॥
स्वकक्षाव्यासभूव्यासविश्लेषार्धं तु मध्यमम् ।
सर्वेषां प्राग्गतं कल्प्यं भूदिनैर्व्योममण्डलम् ॥ ७६ ॥
एकस्य भूदिनस्यास्य कल्प्या प्रत्यग्गतिस्त्विह ।
छायाशङ्कू व्यासकोटी कर्णोऽतो विषुवत्प्रभा ॥ ७७ ॥
छाया या सा विषुवती स्वदेशे स्याद्दिनार्धजा ।
शङ्कुः स्याद्विषुवत्कर्णो यत्र न क्षीयते ततः ॥ ७८ ॥
वर्धमानो महीकर्णः स्यादिवर्जो निरक्षकः ।
अक्षाख्यौ द्वौ ध्रुवौ मेरोरुपरिष्टान्नभःस्थितौ ॥ ७९ ॥
भूतचन्द्रान्तरं भूमिध्रुवान्तरमपि ध्रुवम् ।
समुद्रे मध्यकक्षाऽस्याः क्षितिजस्थौ ध्रुवाविति ॥ ८० ॥
तत्रस्था परिपश्यन्ति दक्षिणोत्तरयोर्मुने ।
अक्षान्तरभावात् स व्यक्षदेश इति स्मृतः ॥ ८१ ॥
अन्यत्राक्षप्रभा यावत् तावच्चक्रस्य लम्बनम् ।
मेरोरभिमुखं यातुरुपर्युपरि दृश्यते ॥ ८२ ॥
ध्रुवस्ततस्ततश्चक्रं नीचैर्नीचैस्तु नारद ।
निरक्षाभिमुखं यातुरन्यथा तद्द्वयं भवेत् ॥ ८३ ॥

अक्षांशा नवति ९० र्मेरौ व्यक्षे लम्बांशकास्तथा ।
लम्बाक्षौ दक्षिणौ ग्राह्यौ गणितेषु तथाऽपि च ॥ ८४ ॥
लम्बो ना च विभज्या चेद्वर्धमानो महीधरः(१) ।
वर्द्धमानः खखर्त्विन्दु १६०० योजनानि क्षितेस्तु सः ॥ ८५ ॥
भूकर्णानुगुणं तस्य ज्याशा दृष्टेरदर्शनात् ।
भूकर्णवृद्ध्यनुगुणं चीयतेऽक्षो दिनोऽधिकः ॥ ८६ ॥
तथाऽप्यक्षोननवतेः शङ्कुर्मन्दो हि गृह्यते ।
अक्षाद्विनोमगमनाल्लम्बाक्षावधिकोनकौ ॥ ८७ ॥
अक्षज्याविज्ययोः क्षेपो यद्यनद्यय इत्यथ ।
लम्बो हि भवता(२) तत्र गृह्यते तर्हि यत्नत ॥ ८८ ॥
तदृच्छानुगुणं लोके सुसिद्धं तन्निराकृतम् ।
स्यात् सुनाधयिता खेटः स्वाध्यायस्तदुपाधयः ॥ ८९ ॥
तस्मात् पञ्चसु सिद्धान्तेषूक्तमार्गोऽवधार्यताम् ।
घृतं मधूष्णं विषवन्मधुनाऽऽज्यं विषं तथा ॥ ९० ॥
संसर्गस्य विशेषेऽपि तथैतदनुमीयते ।
मध्याह्ने विषुवत्यर्कस्तस्याक्षांशा नतांशकाः ॥ ९१ ॥
तन्नतात् पलभा चान्तः साऽक्षच्छाया प्रकीर्त्यते ।
चक्रलिप्तार्धवर्गस्य दशमं चारणीपदम् ॥ ९२ ॥

---

(१) हि तच्छ्रुतः—पा० १ पु० ।
(२) लम्बो लक्षो हि भवता—पा० २ पु० ।

व्यासार्धं तु चतुर्विंशो ज्यार्धपिण्ड इतीर्यते ।
वृत्तस्य खण्डवत्वंशो दण्डवद्यः २२५ समः स तत् ॥९३॥
प्रथम ज्यार्धमेवैतद्वर्गोनकरणीपदम् ।
(१)त्रयोविंशो ज्यार्धपिण्ड परखण्डान्तरं ज्ययोः ॥९४॥
द्विघ्नेष्टहीना खण्डज्या यत्रार्धेन्दुयुता न चेत् ।
खण्डे शताधिके नेत्रवियद्देवैर्युता तु चेत् ॥ ९५ ॥
खाद्रिनेत्रखखण्डा स्यादेष्यखण्डयुता सती ।
खखण्डरहिता जीवा स्यात् पूर्वज्या तु मौर्विका ॥९६॥
प्रायो दशैव सन्त्यासां मध्येकादशवर्जिताः ।
छित्वा कुखण्डमूलानि तत्रान्याः सूर्ययोदितम् ॥ ९७ ॥
यद्वाऽस्य भाज्ये ज्ये तत्र गुणषट्चन्द्रसयुते ।
द्वितीयभान्त्यजास्तिस्रो नगगोवह्निसंयुताः ॥ ९८ ॥

---

(१) एते ९४—१०३ श्लोका वक्ष्यमाणप्रकारेण साधवो भवितुमर्हन्ति परन्तु आदर्शानुरोधेन मूले तथैव स्थापिता इति विज्ञेयम् ।

त्रयोविंशो ज्यार्धपिण्ड परखण्डोऽन्तर ज्ययो ॥ ९४ ॥
द्विघ्नेष्टहीना खण्डज्या पञ्चार्धद्विमिता न चेत् ।
खण्ड स्वेष्टाधिको यत्र विगतस्तवन्यथा तु चेत ॥ ९५ ॥
स्वाग्रमेऽत्र स्वखण्डः स्यादेष्यखण्डाभिध स तु ।
स्वखण्डरहिताज्जीवा स्यात् पूर्वज्या तु मौर्विका ॥ ९६ ॥
प्रायो दशैव सन्त्यासा मध्ये द्वादशवर्जिता ।
छित्त्वा करण्या मूलानि ततोऽन्या सुर्पयोदितम् ॥ ९७ ॥
यद्वाऽऽद्यभान्त्यजे ज्ये च गुणषट्चेन्दुसयुते ।
द्वितीयभान्त्यजास्तिस्रो नगरसवह्निसंयुता ॥ ९८ ॥

तत्पञ्चमी खखान्त्याद्या चेज्ज्या प्राग्वत् ततः स्फुटा ।
द्वयेतौ द्वौ च सामान्यौ मार्गौ नानागुणैर्युतौ ॥ ९९ ॥
त्रिकृत्यधिकचक्रांशमार्धमार्गस्य किञ्च यत् ।
आद्यमार्गे त्रिभज्यार्धं प्रथमज्या न यद्भवेत् ॥ १०० ॥
करणीपदपादोनकरणीदलमेव(१) हि ।
एकद्विभज्याद्वादशीज्या करणीज्यापदं किल ॥ १०१ ॥
एवं तस्माद्द्वाद्यमार्गे तत्सर्वानुगुणः स्फुटः ।
वर्गो निरूप्यते प्रोक्ता त्रिज्या प्राग्वत् करण्यपि ॥ १०२ ॥
चक्रस्य पञ्चवत्यंशो विलिप्ताद्यधिकोऽञ्चतः(२) ।
प्रथमज्यार्धमेतस्माद्विकृति(३)ज्या पुरोक्तवत् ॥ १०३ ॥
(४)द्विघ्नस्य खण्डहीनाख्या नवाब्धिन्नियुतान्यभे ।
तदाब्धिहितयव्योमषड्भिनेनयुतं क्रमात् ॥ १०४ ॥

---

तत्पञ्चमी स्वखण्डाद्या स्यान्ज्या प्राग्वत् तत स्फुटः ।
द्वये- ... ... ॥ ९९ ॥
त्रिकृत्यधिक .. .. ।
प्रथमज्या तु यद्भवेत् ॥ १०० ॥
करणीपदपादोनकरणीपद—(मूल—) मेव हि ।
एक द्विभज्या त्रिज्या तु करणात पदं किल ॥ १०१ ॥
एवं स्पष्टाद्यमार्गस्तु न सर्वानुगुण. स्फुटः ।
वर्गो निरूपितः प्रोक्ता त्रिज्या प्राग्वत् करण्यपि ॥ १०२ ॥
चक्रस्य पञ्चवत्यंशो भक्तिप्राप्तकस्य तु ।
प्रथमज्यार्धमेतस्माद्विकृतिज्या पुरोक्तवत् ॥ १०३ ॥

(१) करणीमूलमेव—पा० २ पु० । (२) आधिक्यः ।
(३) अर्धोक्तिकी ज्या इति ।
(४) इतोऽग्रेऽध्यायसमाप्तिपर्यन्तं ... ।

यद्वात: खण्डसंशुद्धिलिप्ता योज्या: क्रमाच्च ता: ।
सप्तविश्वैर्नगाष्टाभीरसशैलैर्नगाभिधै. ॥ १०५ ॥
अतिष्टयावार्द्धिशैलैरसांभोधिन्निभिस्तत: ।
द्वितीयभान्ते याज्याख्या युगनेत्रेन्दुसंयुता: ॥ १०६ ॥
तत्प्रचमीसेतसूर्यात् तत्तुर्थ्यष्टशैलभाक् ।
सेन्द्रातत्र तृतीयाद्याद्वितीये द्वादशोन्विते ॥ १०७ ॥
आद्यमेन्त्याखदग्भागा विश्वाद्रिश्च स्फुटाध्वनि ।
तत्सप्तमी खभेत्याद्या तत्षष्ठी रदवर्जिता ॥ १०८ ॥
तत्पञ्चमी चतुर्थी सा खात्यष्टिगोग्निसंयुता ।
तृतीया विकला सा तत्फलं भूतिथिसंयुतम् ॥ १०९ ॥
द्वितीया यत्फलं वेदविकलाद्यभथोक्तवत् ।
सस्फुटज्याविधिश्चाचोत्क्रमज्याखण्डमष्टमम् ॥ ११० ॥
ज्यात्वाभावानुलोम्येन सपड्गुर्गान्यभाग्भा ।
परखंडफलं प्रोक्तं स्वखण्डात् स्वस्वपूर्वया ॥ १११ ॥

इति श्रीब्रह्मसिद्धान्ते प्रथमोध्याय ॥ १ ॥

आकर्षत: खसम्बन्धाद्भवतीति स्फुटा स्थिति: ।
मन्दोच्चाभ्यामर्कचन्द्रौ यदा मन्दफलं मुने ॥ १ ॥
आकृष्येते एव तस्मान्मन्दकर्मैकमेतयो: ।
चत्वार्यानयने द्वारौ परेषां(१) द्वे तु तत्र हि ॥ २॥

---

(१) 'द्वाराण्येषाम्'—इति पाठ साधु ।

तत्कर्मणां चतुर्णां च क्रमः प्राक् सूचितो मुने ।
ग्रहभुक्तेः फले कार्यं ग्रहवत् तद्विलोमगे ॥ ३ ॥
फलघ्नमो केन्द्रभुक्तिर्यदि वा त्रिज्यया हृता ।
तत्कर्णाप्ता स्वोच्चभुक्तेर्विशोध्या सा गतिः स्फुटा ॥ ४ ॥
ग्रहोच्चभुक्तियोगात् तु हित्वा केन्द्रगतिं स्फुटाम् ।
शीघ्रोच्चभुक्तिशेषार्धं ग्रहकेन्द्रगतिर्यतः ॥ ५ ॥
शीघ्रोच्चभुक्तिरेकाहतदैक्ये योक्तावद्गतिः ।
शीघ्रार्धभुक्तौ तादृश्यां फलाद्याय ग्रहस्य तु ॥ ६ ॥
फलार्धोर्धं तु मन्दार्धग्रहभुक्तियुताऽर्धिता ।
सा भवेद्विद्यमानत्वात् केन्द्रभुक्तिर्विधोस्तु सा ॥ ७ ॥
सोच्चभुक्तिर्भवेद्यत् सा प्रागुच्चेन्दुगतिस्ततः ।
ग्रहापचेपर्णं चार्धं करणं तत्प्रकीर्त्यते ॥ ८ ॥
ग्रहाणां भुक्तिरेवास्मिन् केन्द्रभुक्तिश्च मान्दयोः ।
स्फुटकेन्द्रगतेस्तस्याः स्फुटभुक्तिर्ग्रहस्य च ॥ ९ ॥
अथ वा केन्द्रभुक्तिः सा त्रिज्या कर्णान्तराहता ।
कर्णाप्ताऽशीघ्रेऽर्धिता च ग्रहभुक्तेर्धनं त्वृणम् ॥ १० ॥
कर्णे त्रिज्याधिकोने तु व्यस्तं मान्दे विधीयते ।
उच्चैर्नीचैर्गते सूर्ये उच्चैर्नीचैर्ययुर्ग्रहाः ॥ ११ ॥
किञ्चित् तस्मात् फलं भानोस्तद्गत्या च तदा नतम् ।
ग्रहभुक्तिहतं भक्तं चक्रलिप्ताभिरर्कवत् ॥ १२ ॥
अर्कभुक्तिवद्ग्येवं ग्रहे कार्यं च तद्गतौ ।

मध्यग्रहेषु चोच्चेषु तद्भक्तिषु च तत्क्षते ॥ १३ ॥
तद्वादावखिलेष्वेवं क्षतं यत् तद्धितं सताम् ।
स्वोच्चैः स्वनीचैस्ताभ्यां स्यादन्यस्यैतद्द्वयं भवेत् ॥ १४ ॥
अन्यस्यैवान्यदीयाभ्यां नातोऽर्कस्यैतदिष्यते ।
क्रियते या दुराशङ्का ग्रहस्फुटविधिं प्रति ॥ १५ ॥
साऽपरं हीयते पुत्र सांप्रतं तत्र तत् फलम् ।
मध्यसंज्ञा ग्रहाः पञ्चैवार्केन्दू नेति मध्यमौ ॥ १६ ॥
"यदि स्यात् तिथिसंवृद्धिह्रासाभावः प्रसज्यते ।
तिथयः सावनाहानि भगणा ह्रासवृद्धितः ॥ १७ ॥
यदि स्युरधिमासोनराव्यभावः प्रसज्यते ।
शुक्रज्ञयोः कर्षकोच्चं शीघ्रं तदितरस्य च ॥ १८ ॥
विक्षेपा न विकल्पयन्तो फलहेतुर्न कल्पना ।
अर्केन्द्वोरपि शीघ्रार्धमन्दार्धादिप्रकल्पना ॥ १९ ॥
निष्फलत्वान्निरस्तैव महावायौ प्रधावति ।
तिरोधानेन षड्जादीन् वाद्यांश इव खेचरान् ॥२०॥
नुदति प्रवहश्चेति मार्गभेदादिदं न सत् ।
कर्माणि यानि चत्वारि ग्रहस्यैवेति तानि च ॥ २१ ॥
शीघ्रार्धं स्याच्छीघ्रफलं चतुर्थे द्विगुणं तथा ।
मन्दार्धं स्यान्मन्दफलं तृतीयमपि नान्यथा ॥ २२ ॥
किञ्चोच्चाभ्यां निरुक्ताभ्यामपकृष्टः पुनस्तथा ।

कल्प्यं चेत् पुनरप्येवं तथार्केन्द्र च नारद ॥ २३ ॥
ग्रहोऽरि न शीघ्रोच्चमिति चेदुच्चताऽस्य न ।
निज्योनशीघ्रकर्णस्य सर्वदा मुनिसत्तम ॥ २४ ॥
नाथः शीघ्रोच्च इति चेद्ग्रहस्तर्ह्यल्पगस्तु सः ।
अथ. कक्षा कल्प्यते चेत् कक्षाऽसौ तत्र कास्य वा ॥२५॥
तूष्णीं कक्षा कल्प्यते चेत् सर्वेषां तर्हि कल्प्यताम् ।
निष्फलत्वान्न सर्वेषामिति चेत् कल्प्यतां फलम् ॥ २६ ॥
निरर्थत्वात् कल्पनाया यथाकार्यं तु कारणम् ।
कल्प्यते चेत् कल्पितं तन्मयैव न तु किं पुनः ॥ २७ ॥
अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि ।
यथाश्रुति मया दृष्टं यत्तदेवानुज्ञातम् ॥ २८ ॥
मध्यमा. स्थायिनः सन्ति नेति चेन्मध्यमानुगाः ।
ग्रहाश्चतुष्कर्मवन्त इति यत् तन्निराकृतम् ॥ २९ ॥
मध्यशीघ्रार्धमन्दार्धफलमेति तदाश्रयैः ।
उपग्रहैश्चापकृष्टा मन्दोच्चैश्च ग्रहा ययुः ॥ ३० ॥
इति चेन्मन्दभागे च नैयाकस्मादुपग्रहाः ।
युज्यन्ते ते प्रकृष्टाश्चेदपकृष्टा ग्रहाश्च ते ॥ ३१ ॥
इति चत्वारि कर्माणि ग्रहस्यैव न तन्मतम् ।
उपग्रहापकर्षेऽपि पूर्वमेवेदमुच्यते ॥ ३२ ॥
अतो मन्दार्धशीघ्रार्धौ न सन्तीति हि नोच्यते ।
असत्त्वेऽन्यतरस्यापि ग्रहयोरर्धसंक्रमोः ॥ ३३ ॥

एकापकर्षणं कल्प्यं ग्रहस्यापि तथा पुनः ।
उपग्रहा न सन्तीति यदि ब्रूयाच्चतुष्टयम् ॥ ३४ ॥
कर्षणां स्याद्ग्रहस्यैव सन्ति तस्मादुपग्रहाः ।
अर्घाख्येनापकृष्टश्च नीचैर्नीचैर्यथा तथा ॥ ३५ ॥
उपग्रहोऽपकृष्टः स्यात् सग्रहस्तेन चेदिति ।
नैवमर्धग्रहस्थानज्ञानमेव तथोच्यते ॥ ३६ ॥
स्वच्छन्दगमनं तद्धि किं तद्वैतच्चनीचता ।
अर्घाख्येनोपकृष्टश्चापकृष्ट उपग्रह ॥ ३७ ॥
ग्रहश्चाप्यपकृष्टः स्यात् तदभावान्न तद्भवेत् ।
विक्षेपौ च न चेदेभ्यो पाताभ्यां शुक्रचन्द्रजौ ॥ ३८ ॥
विक्षेपौ तौ तथा चोगलिप्ता चेन्न स्फुटा स्वदिक् ।
अपकृष्टैर्ग्रहैः सार्कं कर्षका यान्ति यत् ततः ॥ ३९ ॥
तेऽपकृष्टाः स्वमन्दाद्यैः पातास्तैश्च ततः फलम् ।
तृतीयमपि पातानां ग्रहवन्नेति कल्प्यते ॥ ४० ॥
तस्मान्मन्दार्धमन्दोच्चमध्ये यावदुपग्रहः ।
याति यद्दिशि तावत्येवास्ते तद्दिशि मध्यमात् ॥ ४१ ॥
स्वच्छन्दाकर्षकश्च चेपश्चलनमन्यथा ।
शीघ्रोच्चाविव शीघ्राख्यौ बुधशुक्रौ न चेतरौ ॥ ४२ ॥
इति चैतादृगुच्चाभ्यां ग्रहस्थानं च बुध्यताम् ।
याम्योत्तरगती तद्वदुत्क्रमाद्भास्करस्य च ॥ ४३ ॥

तथैवानपकृष्टानां गतेराधिक्यमल्पता ।
ग्रहकर्षकवद्वस्तु किं न चेद्विलुपग्रहे ॥ ४४ ॥
स्वच्छन्दगमनं तेषां मन्दोच्चाः कथिता दृथा ।
मृषावादी च वेदः स्यात् तत् सर्वानर्थकारणम् ॥ ४५ ॥
मन्दार्धाद्यो यद्दिशि च याति तन्मध्यमो ग्रहः ।
यावन्ति कल्पे मन्दार्धा यो गच्छेत् सोऽप्युपग्रहः ॥४६॥
स नास्ति यस्य गमनं कल्पजं गमनं न च ।
मन्दस्फुटाद्भौमशौ हि सोमे च चोपसाधनम् ॥ ४७ ॥
कीर्त्तितं तत्कर्षकाः स्युर्न सम्बन्धान्तरं क्रमात्(१) ।
सूर्यभौमशसोमेभ्यो यथालब्धग्रहा इव ॥ ४८ ॥
कल्पिताः स्युः स्वनामादौ भिन्नाः संज्ञास्तथैव च ।
मन्दाकृष्टैर्हि मन्दाख्या ग्रहैरुक्ता ययुः सह ॥ ४९ ॥
विक्षिप्यन्ते च पातैस्तैस्ते ग्रहा इति कथ्यताम् ।
इति चेत् पातकाणां तु प्रोक्तनामन्तरं भवेत् ॥ ५० ॥
त्यक्तं श्रुतिकृतं नाम नैतदप्यस्ति मौलिशे ।
ग्रहे कृतं यत् तत्पाते कृते नेति च वर्त्तते ॥ ५१ ॥
सोमभौमगयोः पाताः शोध्या मन्देभ्य ईरिताः ।
शुक्रज्ञारातयोर्वामक्रमयं सूर्यकीर्त्तितम् ॥ ५२ ॥
तृतीयेऽस्य न चेदिष्टं तत् तत्राप्यस्ति दूषणम् ।
श्रुत्यन्तरविरोधस्तु मौलिशेऽत्र च गम्यते ॥ ५३ ॥

(१) भुवे गात ३—टी० पा० ।

तद्वाऽस्य गमनं तावन्निर्णीतं च सहेतुकम् ।
उपग्रहनिमित्तं वा न तावत् प्रथमक्रमः ॥ ५४ ॥
यथेष्टकल्पनापत्तेर्द्वितीयः कल्प एव चेत् ।
पातमन्दोच्चमध्ये न फलं साध्यं न तन्मतम् ॥ ५५ ॥
कल्पस्तृतीयश्चेदुच्चेनापकृष्ट उपग्रहः ॥
यत्नेनैव रथं पातमाकर्षति न वा सताम् ॥ ५६ ॥
स्तम्भच्छायादीपवच्चेन्न मन्दोच्चोऽस्य कारणम् ।
परस्परभचक्रार्धपातोपग्रहसङ्करः ॥ ५७ ॥
वामं निष्कारणं यातीतीयं वा कल्पना सती ।
स्वोच्चादुपग्रहाद्वाऽपि नाकस्माद्धि तदिष्यते ॥ ५८ ॥
सहेतुकं कल्प्यमानं कल्प्यते न तु हेतुकैः ।
मन्दोच्चेनापकृष्टस्तु यावद्व्रजति भास्करः ॥ ५९ ॥
तेनाकृष्टा यक्षास्तावत् ते तथोपग्रहैर्ययुः ।
भृत्यैस्तत् क्रियते कर्म स्वामिना क्रियते हि यत् ॥ ६० ॥
प्रत्यक् प्राग्वहिरन्तर्वा तद्ग्रहोऽर्कसमं व्रजेत् ।
इति चेन्नैतदिष्टं स्याद्वेगाद्वावधिकं नृपाः ॥ ६१ ॥
वेगाद्वावधिकं भृत्या वर्त्तन्ते न हि तत्समाः ।
यावान् यस्याधिकारः स्यात् तावत् तस्य प्रवर्त्तनम् ॥ ६२
सर्वचक्राधिपः सूर्यः कियद्याति खमुक्तितः ।
इयद्यातीति युक्तिः स्याद्राजाऽनुचरक्रमितः ॥ ६३ ॥

युक्तिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद॥
जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी॥ ६४॥
श्रुत्युक्तेष्टतरा युक्तिर्नान्यङ्गायेत तच्छ्रुतिम्।
इत्थाऽऽदौ मान्दकर्मान्ते क्रियते शीघ्रकर्मवत्॥ ६५॥
तस्मान्मन्दापवृत्तात् प्राक् शीघ्रेणाधापकृष्यते।
किञ्चित्किञ्चिद्दिवस्यैव इति चेदपकर्षेति॥ ६६॥
नैतद्वं यद्वं चेत् गतिर्नानाविधाऽन्वहम्।
बिम्बं च शुद्धकर्मास्य तद्वदेतदभावतः॥ ६७॥
ननु बिम्बाल्पताधिक्यं खमध्ये चितिजेऽन्वहम्।
इति तु चितिजे ब्रह्माण्डांशवो न ह्यधो भुवः॥ ६८॥
पूर्णीकृपांशवत्तस्माद्दृष्ट्या प्रतिहते महत्।
बिम्बं भूभाभिसंक्रान्तं रक्तवर्णं च दृश्यते॥ ६९॥
धर्मसुखत्वान्मध्यात् स पार्श्वार्ये खखरत्वतः।
स्तोकस्तोकेन भूरश्मिह्रासे चण्डांशुदर्शनात्॥ ७०॥
दृष्टिप्रतिहते बिम्बे क्षीयमाणमिते गते।
आरात् खमध्ये चण्डांशुरश्मिः प्रागल्प्यते भुवः॥ ७१॥
रश्म्यभावाच्च पादोनं चितिजादिव दृश्यते।
त्रिभिश्चतुर्भिः चितिजे खमध्येऽथ कलाहृतः॥ ७२॥
अङ्गुलानि भवन्त्यस्मादित्युक्तं हि महर्षिभिः।
भूमिकयाश्चतुर्भागे स्थितस्यात्मनस्तु यः॥ ७३॥
चितिजस्य खमध्यस्य दूरत्वेवासौ पुरोदितः।

तिग्मयतस्तस्ता लिप्तास्तदानीमङ्गलद्वये ॥ ७४ ॥
दृश्यते मण्डलेकेन विम्बमन्येन वाऽन्यथा ।
एकस्मिन् दिवसे तस्माद्बिम्बाधिक्यात्स्तता न हि ॥७५॥
त्रिघतु कर्णयोगार्धं स्फुटकर्णोऽस्य मस्तके ।
ग्रहस्थरत्यत: किंचिद्वविलम्व्याकर्षण न हि ॥ ७६ ॥
उच्चद्वयानुगुण्येन ग्रहो यद्यपि सञ्चरन् ।
तथाऽपि युगपत् कर्मद्वयं न क्रियते यत: ॥ ७७ ॥
तथाऽऽनीता ग्रहास्तद्वत् दृश्यन्ते नैव वै तत: ।
उपदेशक्रमोऽप्येवं स च कर्मद्वयक्रम: ॥ ७८ ॥
यावता माऽधिक कर्णस्तावताऽर्धेन तादृशी ।
त्रिज्यात स्फुटकर्णोऽपि नार्थसिद्धिर्विवर्जित: ॥ ७९ ॥
उपग्रहाणां यज्ज्ञातकक्षासिद्धिर्जपस्य तु ।
सुतरां मन्दशीघ्राख्यकर्मणो कथिते क्रमात् ॥ ८० ॥
उच्चैर्नीचैर्व्रजन्ते वा कानुरूपं समग्रव: ।
मध्यकर्णस्तत. कर्णान्तरत्व याति यन्मुने ॥ ८१ ॥
यन्तरे वनतो वृक्षा वनप्रान्ते स्थिता इव ।
दृत्वाच्चन्द्रकक्षायां दृश्यन्ते सकलास्तथा ॥ ८२ ॥
भौमार्किबुधजीवानां त्रिंश(१)त्पट्पञ्चवर्जिता: ।
विष्कम्भाश्चन्द्रकक्षायां पष्टि: शुक्रस्य कीर्तिता ॥ ८३ ॥

(१) दम्भोलिवर्मता इति—पा० २ पु० ।

(१)त्रिज्याघ्नाः स्फुटकर्णाप्ता विष्कम्भास्तरस्फुटाः स्मृताः।
तिथ्याप्ता विम्बलिप्ताः स्युरङ्गुलानि पुरोक्तवत् ॥८४॥
कक्षाघ्न भगणा मानं विधोरिच्छेतरस्य तु।
विष्कम्भवः फलमस्येति विष्कम्भः पारमार्थिकः ॥ ८५ ॥
तथाऽर्कस्य स्वकक्षायां विष्कम्भः खखपञ्चषट् ६५००।
षष्टिरष्टाहता ४८० राज्ञस्तथा विम्बस्य नारद ॥ ८६ ॥
निजमण्डलविष्कम्भः स्वकक्षायां फलं विधोः।
कक्षेच्छामानमन्यत् वा मानेष्टभगणेच्छयोः ॥ ८७ ॥
इतीन्दुमध्यकक्षायां विज्ञेयं विम्बयोजनम्।
कक्षा वा भगणा मानमित्येवेच्छाधिकेन तु ॥ ८८ ॥
अर्केन्दुमण्डलव्यासौ स्फुटभुक्तिहतौ तयोः।
मध्यभुक्त्युद्धृतौ स्पष्टौ प्राग्वल्लिप्तास्तदङ्गुलम् ॥ ८६ ॥
दूरस्थत्वात् तु विम्बस्य सौक्ष्म्यं स्थौल्यं प्रकीर्त्तितम्।
लोकदृष्ट्या यथाऽद्रेः स्वस्थाने नित्यं समात्मनः ॥ ६० ॥
अर्कात्रचेन्दुकक्षाप्ता सूर्यविम्बश्रुतिर्यत।
इन्दुविम्बयवाप्ता या क्षोणीना वा न वा ततः ॥ ६१ ॥
अर्केन्दुकक्षाव्यासार्द्धं तद्विष्कम्भावेव्हि ते।
तन्मध्यभुक्तिगुणिते स्फुटभुक्त्युद्धृते स्फुटे ॥ ६२ ॥

---

(१) व्यर्धाष्टवर्तिथास्त्रिशद्विष्कम्भाशास्तु दृश्यत।
भैमा कवुधजीवाना चन्द्रमार्गे तु नारद ॥
इति २ पुस्तके अधिक. पाठ.।

भानोर्भार्धे मही छाया महत्त्वात् मण्डलस्य तु ।
अर्कस्य भूम्याः सूच्यग्रमानं शेषमिलार्कयोः ॥ ९३ ॥
असंकुचितशुद्धार्ककक्षाव्यासदलं फलम् ।
भूकर्णं दृक्छायाग्रस्ततो लिप्तास्तदङ्गुलम् ॥ ९४ ॥
अर्केन्दुकक्षाव्यासार्धे स्फुटे संकुचिते क्रमात् ।
मानेच्छाफलमर्केलाग्रेषं प्रोज्झ्य ततः फलम् ॥ ९५ ॥
भूकर्णादिन्दुकक्षायां छायाव्यासस्तदाततम् ।
युक्त्या कालाङ्गुलं ग्राह्यं युक्त्यन्तरमतिस्फुटम् ॥ ९६ ॥
भूछायेलागतस्याथ तरणिभ्रमणो विधोः ।
सूचीमध्यमकक्षायां कियतीति महीयवः ॥ ९७ ॥
स्फुटसूर्येन्दुभुक्तिघ्नौ भक्तौ मध्यमया फलम् ।
स्फुटार्कचन्द्रकर्णाप्तं फलमर्कदृगाङ्कयोः ॥ ९८ ॥
मानेच्छमध्यकर्णास्तु प्रोज्झ्य सूच्याऽपि भाग्यवः ।
तिथ्यः कलायां सन्त्येवमेतदर्धं विधो. यवः ॥ ९९ ॥
मध्यमिच्छाधिकाल्पार्कबिम्बाभ्यां तादृशं त्वृणम् ।
मध्यार्कग्रहणे मानं तथा स्यादिति तन्मतम् ॥ १०० ॥
तस्यां स्फुटार्ककक्षायां व्यासार्धेनाधिकेन वा ।
अधिकाल्पमृणं माने नाधिकाल्पेऽर्कमण्डले ॥ १०१ ॥
परिध्यंशहते बिम्बव्यासौ बिम्बयवो भवेत् ।
उच्चेन तु समं येन योऽपकृष्येत् स तत्समः ॥ १०२ ॥
योऽत्यल्प उच्चो नीचाल्प. स्ववक्रस्तल्प एव च ।

तेनापक्षयते स्वर्णं मह्रदल्पं वहु स्वतः ॥ १०३ ॥
उच्चैर्नीचैर्गते स्वोच्चपरिध्वंशाः स्वभावतः ।
अल्पाधिककला भुक्तिरुच्चैर्नीचैर्गतस्य हि (१) ॥ १०४ ॥
स्यादेतच्च फले कर्ण(२) शैघ्रचे ऽल्पा गतिरन्यथा ।
अधिकाऽल्पा च या भुक्तिरुच्चैर्नीचैर्गतस्य हि ॥१०५॥
विज्याधिकाल्पे यदि तु वह्निस्फुरति स ग्रहः ।
स्वतः शीघ्रानभिमुखं मन्दं तु क्वचिदस्ति हि ॥१०६॥
नैवं यदि स्यादेवैवं स्यात् पूर्वा परभार्धयोः ।
उच्चैर्ग्रहस्त्वृणधनं वा यद्येतत् फलं क्रमात् ॥ १०७ ॥
यदा स्यादिकला भुक्तिस्तथा या तु भमण्डलम् ।
यद्द प्राग्गतिहीनं वा(३)प्राक्प्रत्यग्गतिवद्ग्रहात्॥१०८॥
सर्वोच्चपातान् वाऽतीत्य ब्रह्माण्डं वै तु नारद ।
प्रतिपादयितुं शक्या वक्रता न यतः परम् ॥ १०९ ॥
प्राग्गतिर्नास्ति यन्नास्ति केवलं तु न कारणम् ।
शनिमन्द्रात् परं चेत् को हेतुः खेटोऽप्यदर्शनात् ॥११०॥
वक्रता चाधिकगताधिव कल्प्यो यदि ग्रहः ।
गतिरन्यानुरूपा सा भूयसीति न कीर्त्यते ॥ १११ ॥

---

(१) अल्पाधिका यथाशक्ति क्षेपा पातैरनपेदृशैः । इति २ पु० पा० ।

(२) स्यादेतच्चलकर्णेन—इति २ पु० पा० ।

(३) या चास्य विकला भुक्तिस्तया याति भमण्डलम् ।
ग्रहः प्राग्गतिहीने वा,...... ... ॥
अत्र पाठ शुद्ध पूर्यते ।

उच्चैर्नीचैर्गतस्यापि कार्या कर्णेन सूक्ष्मता ।
स्थौल्यं विम्बस्य चातो हि प्रसज्येत मुनीश्वर ॥ ११२ ॥
स्फानिष्टदिगतेनैव युक्तियुक्तं यदीरितं ।
उभयोरचिसिद्धे ते तन्मे निगदतः शृणु ॥ ११३ ॥
उच्चाख्यं प्रोज्झ्य केन्द्रं तद्गतगम्यान्तरं तयोः ।
यदि कल्प्येत दोःकोटी तदा बाहुः प्रसज्यते ॥११४॥
गताद्भुजज्या विषमे गम्यात् कोटिपदं भवेत् ।
युग्मभावाङ्गतैष्याभ्यां कोटिबाहू युजीति च ॥ ११५ ॥
लिप्तास्तत्त्वयमैर्भक्ता लब्धं ज्यापिण्डका गताः ।
गतगम्यान्तराभ्यस्ता विभाज्यास्तत्त्वलोचनैः ॥ ११६ ॥
तदवाप्तफलं योज्यं ज्यापिण्डे गतसंज्ञके ।
इत्येवं नैव विवरं सदा ज्यापिण्डशक्तितः ॥ ११७ ॥
गतज्याभावतस्त्विन्दोश्चतुर्थी ज्या सदा भवेत् ।
एवं संवर्त्तमानायां तच्चतुर्थी गता ह्यपि ॥ ११८ ॥
न तात्कालिकसिद्धिः स्याद्वर्त्तमाना यथा स्वतः ।
दृष्टनाडी हता केन्द्रगतिः षष्ट्योद्धृताऽपि सा ॥ ११९ ॥
बाहुकोटी ज्यान्तरघ्ने तत्त्वनेत्रैस्तयोः फले ।
प्रत्यहं वर्द्धमानत्वाच्छीघ्रकेन्द्रस्य वर्द्धते ॥ १२० ॥
बाहुरोजपदे युग्मे क्षीयते कोटिरन्यथा ।
प्रत्यहं क्षीयमाणत्वान्मन्दकेन्द्रस्य वर्द्धते ॥ १२१ ॥
कोटिरोजपदे युग्मे क्षीयते बाहुरन्यथा ।

तद्वत् तद्ग्रहवच्चास्य फलं ग्रहफलोदितम् ॥ १२२ ॥
धनाख्यमन्यद्धीनाख्यं धनाख्यं ग्रहवद्गतौ ।
ऋणाख्यमन्यथा प्रोज्झ्य बहुभुक्तिं गते फलात् ॥१२३॥
ज्यान्तरघ्नी गतिर्यद्वा दोःकोटिज्या ऽथ दृक् क्वचित्(१)।
त्रिंशत्र्यंशादिभिर्मन्दे त्रिचन्द्राद्यैर्हता हृता ॥ १२४ ॥
शैघ्ये त्रिभज्यया तुल्या दोर्ज्या चेत् क्षीयते ऽन्वहम् ।
वर्धते स्फुटवृत्तांशास्तथा व्यस्तास्तु नान्यथा ॥ १२५ ॥
तद्व्यस्तं जीवयोरन्योस्तु शैघ्र्ये युक्तिश्च सैव हि ।
स्फुटवृत्तान्तरहते दोःकोटिज्ये ग्रहस्य तु ॥ १२६ ॥
गतार्धे स्फुटवृत्तघ्ने बाहुकोटिज्ययोर्धनम् ।
वर्धमाने परिध्यंशे क्षीयमाणे ऋणं मुने ॥ १२७ ॥
गत्यर्धा बाहुकोटिज्या ग्रहवद्वर्धते यदि ।
धनात्मिका क्षीयते चेदृणरूपेति सैव च ॥ १२८ ॥
निक्षिप्य फलजान्योन्यैः हत्वा योगान्तरं मुने ।
भगणांशैर्बाहुकोट्योः फलजे तां विभज्य च ॥ १२९ ॥
ग्रहभुक्तेर्दोःफलज्यावर्गान्तरमितीरिता ।
कर्णदोःफलजावर्गैर्नाडिका यावता भवेत् ॥ १३० ॥

---

(१) दृक्क्वचित्—इति २ पु० पा० ।
ग्रहभावफलज्ये दृग्विधा द्विज्यया गुणीकृता ।
गुणिता च गतेर्विश्व स्वर्णबाहुफलज्यया ॥
इति २ पुस्तकेऽधिक० पाठ० ।

गते कोटिफलज्या तु द्विधा स्यात् तावता हृता ।
कर्णयोर्वृद्धह्रासौ तु स्वल्पायां गतिखेटयोः ॥ १३१ ॥
ग्रहदोःफलजावर्गो यावतोनाधिकं व्रजेत् ।
यावद्वर्गे गतिः कर्णस्तावत्येव न संशयः ॥ १३२ ॥
तां तु वर्गान्तरात् कर्णदोःकोटिज्यां विशोधयेत् ।
क्षीयमाणे वर्द्धमाने भूभाया तद्वधे धनम् ॥ १३३ ॥
कुर्याद्यथोक्तनिष्पन्नकर्णवाक्ये यथा तथा ।
वर्धते क्षीयते चापि स्वगात् कोटिफलेन च ॥ १३४ ॥
कर्क्यादिकेन्द्रे तद्व्यस्तं चलकर्णस्तथा ततः ।
कर्णे कक्षागते कोटिफले मोक्षो महामुने ॥ १३५ ॥
छेदोऽसौ द्विगुणस्तेन स्वच्छेदाप्तफलेन च ।
दोःफलानगुणश्चेन्दोः स्वकादूनाधिको भवेत् ॥ १३६ ॥
स्थिरीकर्मफलैनैव कर्णः कल्प्यः स्फुटः ततः ।
गत्यर्धं चलकर्णे स्यात् लिप्यादोःफलजावधे ॥ १३७ ॥
ग्रहबाहुफलज्या तु कर्णान्तरहृता तथा ।
स्वमूलाधिककर्णेन ग्रहकर्णविवारिणा ॥ १३८ ॥
ऊनाधिकगुणा तादृक् फलं यत्तच्छिदाऽन्यथा ।
स्वकाभ्यां स्तकर्णाभ्यां ग्रहात् सिद्धात् ग्रह सुने ॥ १३९ ॥
तत्पूर्वकालिके हित्वा भुक्तौ सत्यां गते फलम् ।
तादृक् स्यादिति संस्कारोदृसात् कर्णादिहाधिकः ॥ १४० ॥
निष्पन्नराशेः कर्णे न गते दोःफलमौर्विका ।

ज्यां प्रोज्झ्या तत्त्वयमलैर्हत्वा तद्विवरोद्धृतम् ॥ १४१ ॥
संख्यातत्त्वाश्विसंवर्गे संयोज्य धनुरुच्यते ।
इति क्रिया यदा तत्र तत्त्वाश्विभ्यः फलं लघु ॥ १४२ ॥
यज्ज्याखण्डफलं यावत् तावत् तत्त्वाश्विसङ्गुणम् ।
तज्ज्याखण्डोद्धृतं भुक्तेः फलं लिप्तादिकं भवेत्॥१४३॥
यथा ग्रहफलं यत्र तद्गतौ च गतेः फलम् ।
तथाऽन्यथा त्वृणफलं वक्रभुक्तिस्त्वृणाधिके ॥ १४४ ॥
भुजज्याचीयमानत्वादत्यल्पत्वथवणस्य च ।
प्राग्लभ्यते च गत्यल्पं पूर्वाह्नादुत्तरे दिने ॥ १४५ ॥
भुजस्य वर्द्धमानत्वादत्यल्पत्वनणस्य च ।
पराद्धौदौ महत्त्वं पूर्वाह्नादुत्तरे दिने ॥ १४६ ॥
अतो वक्रानुवक्रौति परपूर्वार्डयोः क्रमात् ।
गत्यग्गतेर्ह्रासनिवृद्धी वक्रोत्या त्वन्वहं गतौ ॥ १४७ ॥
मन्दमन्दार्डयोः कार्यं स्याच्छेदत्वादवक्रता ।
अर्द्धितत्वात् फलस्यैव शीघ्रार्द्धे मुनिसत्तम ॥ १४८ ॥
दूरस्थितश्च शीघ्रोच्चाद्ग्रहः शिथिलरश्मिभिः ।
सव्येतराकृष्टतनुर्वक्रभुक्तिर्भवेदिति ॥ १४९ ॥
नाकृष्यन्ते हि शीघ्रार्द्धादाकृष्यन्ते ग्रहा इति ।
विशेषोऽस्तीति चेन्नित्यं तत्तद्भावग्रहादिषु ॥ १५० ॥
अर्द्धितत्वात् फलस्यैवमित्युक्तं कारणं ...
इति चेद्वक्रभुक्तिश्च किं न स्यात् ताहशे ... ॥ १५१ ॥

यतो न रश्मिशैथिल्ये वाङ्मात्राद्रूस्वय. किल ।
सुस्वकम्रमकन्यायेनोच्चाभिमुखमेव च ॥ १५२ ॥
स्वय याति ग्रहो भुक्तिस्तयुक्त्यनुगुणा भवेत् ।
उपचारः सर्वमन्यन्मुखेयमिति हि स्थितिः ॥ १५३ ॥
शीघ्रप्रत्तांशानुरूपं विप्रकर्षः प्रकल्प्यते ।
शीघ्रोच्चात् सप्तमे भौम. शुक्रो ज्ञेयस्तथाऽष्टमे ॥ १५४ ॥
शनैश्चरस्तु नवमे वक्रिणस्ते त्वविक्रमः ।
षट्के च पञ्चके तद्वच्चतुर्थे मुनिसत्तम ॥ १५५ ॥
अष्टौ विंशतिरर्द्धोनगजाग्निव्यर्धखेषवः ।
त्रितर्काः सत्रिभागाद्रिरसास्त्यङ्काश्च सषट्शतम् ॥ १५६ ॥
नवाशा नवसूर्याश्च वेदेन्द्राः शरबाणभूः ।
खात्यष्टिः खधृतिर्गोऽतिधृतिर्विश्वाश्विनस्तथा ॥ १५७ ॥
वेदाकृतिर्गोद्विरसाः कश्विरसा युगार्थदृक् ।
खोत्कृतिरव्ययहीनागरसहस्ता. खदन्तिदृक् ॥
खगोऽश्विनः खदन्ताः षड्दन्ता शैलगुणाग्नयः ॥ १५८ ॥
मेषाद्यश्व्यादिमध्याख्याः षडंशोना' खषड्गुणाः ।
त्रित्रिषट्पञ्चवह्नीन्दुद्वियोऽर्थार्धदृक्शराः ॥ १५९ ॥
शरेन्दुभूद्विवह्नित्रित्रिगो वेदाब्धिवह्नय (१) ।
शराः शतं द्विद्विरदास्ताराःसंख्या' स्वरश्मिभात् ॥ १६० ॥
पुनर्वसूत्तरर्क्षे तु दक्षिणर्क्षे च नारद ।

१ श्विवेदाग्निवह्नय इति—पा० २ पु० ।

प्राङ्गामपि वाऽश्विन्योः सहायमुपकारणे ॥ १९१ ॥

| नक्षत्राणि | ध्रुवकाः | | तारासंख्याः | शरांशाः |
|---|---|---|---|---|
| अ | ८ | ० | ३ | १० उ |
| भ | २० | ० | ३ | १२ उ |
| कृ | ३७ | ३० | ६ | ५ उ |
| रो | ४९ | ३० | ५ | ५ द |
| मृ | ६३ | ० | ३ | १० द |
| आ | ६७ | २० | १ | ९ द |
| पु | ९३ | ० | २ | ६ उ |
| पु | १०६ | ० | ३ | ० उ |
| आ | १०९ | ० | ५ | ७ द |
| म | १२९ | ० | ५ | ० उ |
| पू | १४४ | ० | २ | १२ उ |
| उ | १५५ | ० | ५ | १३ उ |
| ह | १७० | ० | ५ | ११ द |
| चि | १८० | ० | १ | २ द |
| स्वा | १९९ | ० | १ | ३७ उ |
| वि | २१३ | ० | २ | १ द ३० |
| अ | २२४ | ० | ३ | ३ द |
| ज्ये | २२९ | ० | ३ | ४ द |
| मू | २४१ | ० | [illegible] | ९ द |
| पू | २५४ | ० | ४ | ५ द ३० |
| उ | २६० | ० | ४ | ५ द ३० |
| अ | २६६ | ४० | ३ | ६० द |
| श्र | २८० | ० | ३ | ३० उ |
| ध | २९० | ० | ५ | ३६ उ |
| श | ३२० | ० | १०० | १ द ३० |
| पू | ३२६ | ० | २ | २४ उ |
| उ | ३३७ | ० | २ | २६ उ |
| रे | ३५९ | ५० | ३२ | ० उ |

अश्वयोनिक्षुरप्रख्यं शकटैणशिरोनिभम् ।
माणिक्यगृहशालाभं चक्राकारसन्निभम् ॥ १९२ ॥
द्वे पर्यङ्कनिभे हस्तो मुक्ताविद्रुमसन्निभम् ।
तोरणं बलिसङ्काशं कुण्डलं सिंहपुच्छवत् ॥ १९३ ॥
शय्यैरभदन्ताभं च तथा शय्यानिभं मृदङ्ग ।

गजकर्णाकृतिः कर्णः शृङ्गाटकनिभोऽभिजित् ॥ १६४ ॥
मृदङ्गसदृशं तद्वत् वृत्ताकारं तथा पुनः ।
उभे शय्यानिभे तद्वन्मृदङ्गसदृशं पुनः ॥ १६५ ॥
अश्विन्या मुरजाभं तद्वन्मूलेऽप्यन्यदार्धिकम् ।
आषाढद्वितयं चैव योगताराऽथ वक्ष्यते ॥ १६६ ॥
उत्तराचित्रसौम्यानां मध्यमात् त्रिभमेव हि ।
ब्रह्मादित्यभदैत्यानां प्राची हस्तस्य वायवी ॥ १६७ ॥
पश्चिमा तु द्वितीया च श्रविष्ठायाश्च पश्चिमा ।
पितृपौष्णयमाग्नीनां श्रवणाभिजितोस्तथा ॥ १६८ ॥
मूलार्द्राभार्धसप्तांशे स्वस्थानात् प्रागवस्थिता ।
दृश्यते यस्य तस्यास्ति न स्वप्नेऽपि शिवस्मृतिः ॥ १६९ ॥
यत्र यावत्सु विद्धिप्तास्तारा अंशेषु वेधसा ।
मयैव तत्र यावन्तो विद्धांशा उपग्रहाः ॥ १७० ॥
द्विदेवादृचयं स्पष्टस्पष्टार्का हि प्रचेतसः ।
स्वक्रान्तेर्दक्षिणस्थानात् तदन्येभ्यस्तथोत्तरे ॥ १७१ ॥
आगाऽर्कपञ्चवाणाशा नवषट्खाद्रिखांशुमान् ।
विश्वेशहस्तसप्ताग्निरध्यर्धविकृतात्मकाः ॥ १७२ ॥
व्यर्धतर्काः शराः षष्टिस्त्रिंशत् षट्त्रिंशदेव हि ।
अध्यर्धकृत्युत्कृतिः खं विक्षेपांशाः सुराश्विभात् ॥ १७३ ॥
क्षेपार्धांशो वारुणस्य क्रायायाभिन्नमङ्कतः ।
विक्षेपा दक्षिणेऽशीत्यामगस्त्यो मिथुनं गतः ॥ १७४ ॥

मिथुनांशे मृगव्याधो विंशे याम्ये नभोऽर्धवैः ।
हुतभुग् ब्रह्महृदयौ वृषे द्वाविंशभागगौ ॥ १७५ ॥
अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ ।
पूर्वस्यां ब्रह्महृदयात् पञ्चांशैस्तु प्रजापतिः ॥ १७६ ॥
सौम्येऽष्टत्रिंशदंशैस्तु निर्देश्यः सर्वदा मुने ।
उत्तरांशैरपांवत्सश्चित्रायां पञ्चभिस्तथा ॥ १७७ ॥
आपस्ततोऽधिकः स्वल्पे षड्भिरंशैस्तदुत्तरे ।
यद्देशादौ-तदाऽन्यस्मिन् ज्ञाते तारागणेऽपि च ॥ १७८॥
फलाभावान् न तं सर्वमुक्तश्चेहे कथितुं मुने ।
युगादौ विष्णुताराया: क्रतुर्भागैः समाश्रितः ॥ १७९ ॥
प्राच्यां त्रिकस्तैः पुलहः पुलस्त्योऽतो दशांशकैः ।
अत्रिस्ततस्त्रिभिर्भागैरङ्गिरा ह्यष्टभिस्ततः ॥ १८० ॥
वसिष्ठः सप्तभिस्तस्मान्मरीचिर्दशभिस्ततः ।

तत्पश्चाच्चलितं चक्रमुपचारोऽयमित्यपि ॥ १८५ ॥
तत्तत्पश्चाक्रान्तिप्रसङ्गाद्द्विद्दग्लवाः ।
ततोऽन्यथाऽयप्रत्यक् किञ्चित् किञ्चिद्व्रजन्ति हि ॥१८६
तत्तत्पश्चाक्रान्तिप्रसङ्गेऽपि निजास्पदात् ।
पश्चिमांशक्रमप्राप्ते प्राक् चक्रं चलितं स्थितम् ॥ १८७ ॥
यावत्सृष्ट्यादिनिर्दिष्टस्थानं तावत् प्रभान्ति ते ।
भाद्येषु चरतां तेषामन्तरांशास्तदास्पदात् ॥ १८८ ॥
तत्तत्प्रागंशक्रान्तिप्राप्तेः स्यात् प्राग्लवस्य च ।
प्राक् चक्रं चलितं चेति नारदैवोपचर्यते ॥ १८९ ॥
प्रागंशक्रमप्राप्ते प्राक् चक्रं चलितं भवेत् ।
प्राक्पश्चाच्चलनांशोनाः स्वं स्वाङ्कास्कारादिषु ॥ १९० ॥
क्रान्तिकीलांशलग्नानां लग्नं द्युगतं द्वयो. ।
स्फुटार्थमयनार्थं च प्रत्यहं ह्युदयास्तयोः ॥ १९१ ॥
यद्दिने यस्य कक्षा च तत्र तेषां प्रवृत्तितः ।
इत्येतदैवं चलनं प्राक् युगे तानि च षट् शतम् ॥१९२॥
युक्तयाऽयनग्रहस्तस्मिंस्तुलादौ प्राक्चलं भवेत् ।
यद्वा तच्छुद्धचक्रे या मेषादौ प्राक्चलं भवेत् ॥१९३॥
अयनांशास्तद्भुजांशास्त्रिघ्नाः सप्तो दशोद्धृताः ।
प्राक्प्रत्यक्चलनं चक्रस्यैवेति मनुते तु यः ॥ १९४ ॥
चलांशसंस्कृतस्तस्य ग्रह एव स्फुटग्रहः ।
चनभ्युपगमादेतस्योपचारश्च नेदिति ॥ १९५ ॥

दोर्ज्या त्रिज्या क्रान्तिजीवा चेत् सप्ताङ्गगुणोन्नयः ।
चापक्रान्तिरदज्याख्या चक्रपूर्वापरार्धयोः ॥ १९६ ॥
सा तुल्यभिन्नदिक्क्षेपयुतोना स्यात् स्फुटा च दिक् ।
एवोभयोरधिकदिग्ज्ञानोऽयमितरस्य च ॥ १९७ ॥
रक्षोगणत्वात् पातानामपसव्यं ययुर्ग्रहाः ।
प्राक्पश्चार्धगतः पातो ग्रहाद्भ्रामयति ग्रहम् ॥ १९८ ॥
याम्योत्तराशाभिमुखं केन्द्रदोर्ज्या च पूर्ववत् ।
क्रान्तेः पूर्वे वा परार्धे याम्यक्षेपो यदेष्यति ॥ १९९ ॥
पातं संशोध्यापकर्ष्यात् केन्द्रदोर्ज्या च विद्धि भेः ।
दोर्ज्या त्रिभज्या चैकाशीत्यंशकाः परमं ययुः ॥ २०० ॥
विक्षिप्यते राहुणा तु दोर्ज्या क्रान्तिलवाश्रया ।
तन्नवांशं द्विगुणितं जीवस्त्रिगुणमुर्विजः ॥ २०१ ॥
बुधशुक्रार्कजाः पातैः विक्षिप्यन्ते चतुर्गुणम् ।
दशघ्नत्रिवनाङ्गार्करसार्कार्काहृतस्य च ॥ २०२ ॥
विम्बस्य पातविम्बत्वात् क्षेपस्तद्वनुरुच्यते ।
त्रिगुणास्त्वंशकैर्भक्तास्त्रिज्यार्धं विम्बयोजनम् ॥ २०३ ॥
दस्रादीनां स्फुटं नास्ति स्फुटं ताराग्रहस्य तु ।
इन्दोरपि समीपत्वान्नैवं स्याद्बिम्बयोजनम् ॥ २०४ ॥
रूपसाम्यात् समीपत्वादन्येषां भगणस्य च ।
समानन्यायतापत्तिः कक्षाभेदान्न सा सती ॥ २०५ ॥
अपक्रमात् सक्षेपान्ते दृश्यन्ते खचरा यतः ।

क्रान्तिमेत्य पुरः चेषं पश्चाद्देतीति चेत् तत. ॥ २०६ ॥
उभयानुगुणं शुवक्रान्त्यन्ते खेचरी व्रजेत् ।
नान्यथापत्तिरित्येवं प्रोक्ता शङ्का निरास्पदा ॥ २०७ ॥
दो.कोट्योरिष्टजीवोना त्रिज्याऽन्या क्रममौर्विका ।
चक्रक्रान्तिमहीकक्षामानेच्छाफलमित्युत ॥ २०८ ॥
विन्द्यादुयङ्घनस्थानं क्रान्तिदिक्कं विनिर्दिशेत् ।
तस्मिन्नुक्तविशालार्धं क्रान्तिकोट्युत्थमौर्विका ॥ २०९ ॥
स्याद्दोरात्रार्धकर्णः स्याद्दिनव्यासदलं मुने ।
स्वाहोरात्रार्धमित्यार्यैरुच्यते नामभिस्त्रिभिः ॥ २१० ॥
क्रान्त्येति यावत् तावत् तु व्यस्ताद्दोजपदोत्थया ।
तन्मेरुमध्यात् तावती स्यात्चक्रार्धस्य तावती ॥२११॥
यावती युगपत्क्रान्तिस्तावती रात्रिरुच्यते।
अन्यद्दिवाऽत्र तन्मेरुः परो मेरुरितीरितः ॥ २१२ ॥
मेरुस्थां मेरुकाचायां भागे पञ्चदशे मुने ।
विलोमेनायनान्ते तु सुरासुरविभागयोः ॥ २१३ ॥
नाडीपष्ट्या सदाहर्नाडीषष्ट्या सदानिशा ।
तदन्तरे म्रत्युलोकः क्वचिद्दृष्टाहर्दिवानिशोः ॥ २१४ ॥
तथैव घटिकाषष्ट्या ते यत्सर्वं यथोदितम् ।
दारुभिर्विषुवत्कक्षाक्रान्तिकक्षा उभे अपि ॥ २१५ ॥
आधारकक्षा क्षितिज मण्डलं चक्रकैः समाः ।
राश्यंशकक्षा. षट्तिस उदक् तिस्रस्त्वपागतो. ॥२१६॥

कृत्वा तद्वद्दिनव्यासदलैर्बद्ध्वा यथोचितम् ।
आधारकक्षयोर्योगो ध्रुवयोः स्थानमत्र तु ॥ २१७ ॥
रथचक्रविलि मेरुदण्डद्वीपाद्रिसागरैः ।
नदीभिः पत्तनपुरैर्भूगोलेन युतेन च ॥ २१८ ॥
क्रान्तिकक्षाश्चतुःषष्टिस्ततो वृत्तेन सर्वतः ।
मध्योन्नतं प्रसार्याग्रे उभयत्र विनिर्गते ॥ २१९ ॥
यथा ध्रुवौ ध्रुवसमौ स्तम्भयोः स्थापयेद्ध्रुवम् ।
कक्षाभिर्मध्यकक्षाद्यैर्ध्रुवद्वयगतैरपि ॥ २२० ॥
विभज्य गोलं द्वादशधा मेषादीन् निर्दिशेत् समान् ।
तुलामेषादितः कर्किमृगादि च लवद्वयोः ॥ २२१ ॥
तन्मुखाधारकक्षायां योगकक्षां प्रवेशयेत् ।
क्रान्तिसञ्ज्ञा तिर्यगेवं तुलामेषादितः सुत ॥ २२२ ॥
स्वाधारं ध्रुवयोः कक्षा मध्यस्था क्षितिजाभिधा ॥
अक्षांशमानोपरिष्टाद्योजयेत् तन्त्रसुत्तमम् ॥ २२३ ॥
आच्छाद्य शुक्लवस्त्रेण निर्दिश्यांशांश्च नाडिकाः ।
मेषोन्नतस्थानतस्तु तच्कुद्रक्रान्तिमस्तके ॥ २२४ ॥
नतं वियच्चरं स्थाप्यं कालयन्त्रैश्च कालवित् ।
सूर्योद्दिनगतैः सूत्रैरुन्नयेदुदयस्थलात् ॥ २२५ ॥
क्षितिजादुदयं लग्नं तद्वशाच्च खमध्यगम् ।
अस्तं गच्छंश्च विज्ञेयः सर्वं प्रत्यक्षतामियात् ॥ २२६ ॥
यच्चाऽचला मही मेरुध्रुवौ क्षितिजमण्डलम् ।

यवटस्यमधोभागं चितिजादत्र कारयेत् ॥ २२७ ॥
उपर्यधोगता नाड्यः क्षितिजाः स्युरहर्निशोः ।
साधे चक्रस्य तिर्यक्त्वादुदयस्थो ह्युत्तरम् ॥ २२८ ॥
क्षपा सञ्चरतोऽल्पा स्यादनल्पं दिनमात्मन ।
अन्यदेतस्य संयातुर्लङ्काचितिजमण्डलात् ॥ २२९ ॥
अत ऊर्ध्वं प्राप्तदृष्ट्या चितिजात् तादृशात् खकात् ।
एवं सत्युत्तरक्रान्तौ त्रिंशतोऽल्पाधिकं दिनम् ॥ २३० ॥
पूर्वापरामरांशे तु याम्यक्रान्तौ विपर्ययात् ।
अचच्छया द्वादश चेन्मेषादिचितिजान्तरम् ॥ २३१ ॥
क्रान्तिज्यालघुकचाया तत्चितिज्येति चोच्यते ।
तच्चापार्धं दिनव्यासदलं त्रिज्येति कल्प्यताम् ॥ २३२ ॥
सा विशिष्टा चरज्या च चरप्राणा हि तद्धनुः ।
नाड्यः पञ्चदशैतेन द्युचपार्धादिसंस्कृताः ॥ २३३ ॥
दिनचिपे तद्द्विगुणे षष्टिरेव तयोर्युतिः ।
कचायामधिकाल्पायां महत्यल्पाश्च नाडिकाः ॥ २३४ ॥
महान्तोऽल्पास्तयांशा यद्देपुवत्यां ततोऽधिकाः ।
भागतकचासु षट्खल्पास्तोकास्तोकेन नारद ॥ २३५ ॥
तदैवेदं भवेदोजपदे चिप्त्वाऽऽदितोऽन्यथा ।
अनोजपदमेष्वेव दुःसाध्यत्वाच्च कस्य चित् ॥ २३६ ॥
युक्तिसिद्धैव कचाणां कल्प्यं व्यासदलं समम् ।
इष्टयुभुक्तिकर्णार्धमेकद्वित्रिभमौर्विकाः ॥ २३७ ॥

फलं चापानुरूपं तत् तत्कक्षासु प्रकल्प्यताम् ।
अहोरात्रार्धकर्णैः स्यात् तस्य तस्य मितिर्भवेत् ॥२३८॥
इष्टच्छायामन्यकक्षायां त्रिज्या त्रिज्याधिका न तत् ।
इष्टक्रान्त्याचापखण्डा मेषाद्यङ्कोदयासवः ॥ २३९ ॥
खागाष्ट्योऽर्थगोऽग्न्यैकाः शरत्र्यङ्कहिमांशवः ।
कर्काटान्ते विलोमेन तुलायाः षडिमे मन्हत् ॥ २४० ॥
अनल्पा राशयोऽन्योन्यं तल्लग्नादोष्टशा भमि ।
मध्यप्रान्तमहावायुखण्डवायुवशाद्गतिः ॥ २४१ ॥
शीघ्रमन्दाश्रयान् खेटान् दर्शयेत्. समसञ्चरान् ।
मध्यामध्यमहाखल्पमार्गाभ्यां भ्रामकं समम् ॥ २४२ ॥
सर्वेषां चित्रमस्तीति सा ग्रहाऽस्तु तदेव च ।
खेचारिणः खगा. खेटाः खेचरास्त्रवियच्चराः ॥ २४३ ॥
इतीह व्यवहारोऽयमृषीणां महतां मुने ।
पूर्णं मेषादिभिर्गोलं चक्रं स्यान्न तु चेन्न तत् ॥२४४॥
ग्रहमैत्रादिवद्भावा मेषाद्या हि प्रकीर्त्तिताः ।
वस्तुवृत्तेन मेषाद्या ग्रहमैत्रादिवन्न हि ॥ २४५ ॥
व्यस्तादुत्तरतस्तत्तदुत्तरोत्तरतो नतम् ।
पार्श्वयोः क्षितिजं व्यक्तं क्षितिजादुत्तरे दले ॥ २४६ ॥
तथा दक्षिणचक्रार्धे दृश्यते ह्यन्यथा मुने ।
तावत्प्रतीत्यै क्षितिजं तत् तावदुभयास्पदम् ॥ २४७ ॥
कल्प्या निरक्षाः क्षितिजप्रकारस्थानतास्ततः ।

उत्तरोत्तरतोऽधोऽधो मृगषट्कमुदेति हि ॥ २४८ ॥
निःशेषं स्वोदयस्थानं पश्चात् स्पष्टेन गच्छति ।
अतो मृगाद्याः षट् स्वचरखण्डविवर्जिताः ॥ २४९ ॥

स्वोदयाः कर्कटाद्यास्तु
दृश्यन्ते षट् ततोऽन्यथा ।
तत्कालक्रान्तिकच्चातो
राशीनां चितिजात् स्वकात् ॥ २५० ॥

उदयास्तमयावेव स्वकार्येणान्यथा यतः ।
लग्नानयनवेलायां संस्कारोऽत्रायनस्य च ॥ २५१ ॥
दृष्टतः क्रान्तिकच्चातो यदन्यत् तदपीह तत् ।
मर्त्यलोकोत्तरावाप्योरवभा सप्तविंशतिः ॥ २५२ ॥
तयोर्मृगाद्याः कर्काद्या युगपत् षष्टिदर्शनात् ।
अतो देवासुरांशे तु व्यस्तलग्नाद्दिनं क्षपा ॥ २५३ ॥
अमृत्युलोके गणयेन्नैतद्देवं महामुने ।
यद्राशिस्थो यत्र दृष्टस्ते मासास्तत्र दृश्यकाः ॥ २५४ ॥
यद्राशेस्तद्दृहः प्राणास्तस्य भुक्तेः कलोद्धृतेः ।
अधिकालं त्वहोरात्रं ताराहोरात्रतो भवेत् ॥ २५५ ॥
नाक्षत्रनाडयस्ता नाड्यस्तासु स्वर्णं चरं यदि ।
कुर्वीत चरनाडीश्च प्रोक्तं तन्मानजं फलम् ॥ २५६ ॥
दृष्ट्वा तत्तदहोरात्रं नाक्षत्रं मानमित्यथ ।
षष्टिश्च तत्र नाक्षत्रं संस्कुर्यात् साद्यो मुने ॥ २५७ ॥

स्वाहोरात्रचतुर्भागे नाचत्रं द्युचपादलम् ।
सौरे नाड्यो भुक्तिसिद्धास्तत्तन्नाड्योऽन्ययोर्द्भवाः॥२५८॥
ग्रहोदयानतरं पदिस्तन्नाचत्रदिनान्तरम् ।
भवन्ति फलमानेच्छास्ताश्चार्च्यो नाडिकाः स्मृता॥२५९॥
नाचत्रनाड्यः कथने सौरास्तात्कालिकागमे ।
छायालग्नागमे तत्तन्नाड्यो ग्राह्या इति स्थितिः ॥२६०॥
अनुक्तं रोमशेन्द्रकैराद्यैस्तत्तत् स्मृतं स्वतः ।
इत्येवं कथितं पुत्रान्यद्दै शृणु समाहितः ॥ २६१ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
द्वितीयोऽध्यायः ॥ २ ॥

तिथयस्त्रिंशदृचाणि सप्तविंशतिरेव हि ।
तावन्तो भगणे योगाः करणानि नभोरसाः ॥ १ ॥
अर्कोनचन्द्रलिप्ताभ्यस्तिथयः करणानि च ।
ग्रहस्य भानि सार्केन्द्वोर्योगाः स्युर्योगभाजिताः ॥ २ ॥
प्रवेशनिर्गमौ भोगस्तेषां तावन्मुहुस्तदा ।
तौ कार्यौ वर्त्तमानानां तत्तन्मध्यस्फुटग्रहैः ॥ ३ ॥
मासादिकरणं हित्वा किंस्तुघ्नं स्थिरसंज्ञितम् ।
तिथ्यर्धराशेः सप्तैव ववादि चरसंज्ञितम् ॥ ४ ॥
मासेऽष्टचत्व एकैकं वर्त्तते करणं परम् ।
स्थिराणि चोर्णि मासान्ते शकुनं च चतुष्पदम् ॥ ५ ॥
नागस्तदनु कृष्णायाश्चतुर्दश्याः परार्धतः ।

पूर्वापरार्धजा विष्टिर्विष्टिरेव दिवानिशोः ॥ ६ ॥
सा त्याज्या त्वन्यथा भद्रा सर्वकर्मसु भद्रदा ।
पुच्छाख्या दशमे विध्या अपि चैतच्छुभावहा ॥ ७ ॥
सा कृष्णाऽत्युन्नता स्थूला ह्नुगण्डस्थला मुने ।
उग्रगण्डा दीर्घनासा वह्निनेत्रा महोदरा ॥ ८ ॥
क्रोडी च भीकराकारा सर्वारिष्टकरी सदा ।
लाङ्गूलिनी वह्निलवसुद्गिरन्ती त्रिपाज्जगत् ॥ ९ ॥
सर्वं व्याप्नोति पातोऽपि तद्रूमस्तत्क्रियः पुमान् ।
द्विपादपुच्छ एवासौ संज्ञाभेदेन वैधृतः ॥ १० ॥
सप्तादशे सप्तविंशे योगे च सह वर्त्तते ।
कचिच्च तस्मात् प्रबलः कचित् तस्मात् सुदारुणः ॥११॥
चलांशसंस्कृतार्केन्द्वोस्तदसंस्कृतयोस्तु वा ।
भिन्नैकायनगतयोर्युतौ भार्धेन मण्डले ॥ १२ ॥
क्रान्त्योस्तौल्ये क्रमात् पातो वैधृतश्च सुदारुणः ।
विषुवत्क्रान्तिसाम्यात् द्विर्यदा स्युर्द्विविधास्तदा ॥ १३ ।
द्वितीयप्रबलः पातो द्विर्भवेदिति निश्चयः ।
क्रान्त्याऽभिचरतोरेव भास्करेन्द्वोः परस्परम् ॥ १४ ॥
तावदेवास्य पातोऽयं व्यतिपातोऽयमिरयुत ।
अयं प्रसिद्धोऽतस्तावद्देवाख्यापि च संभवः ॥ १५ ॥
परस्परं वा चरतोरर्केन्द्वोः प्रबलोद्भवः ।
स्यात् तदर्धोक्तविषुवे चलसंस्कृतसंभवे ॥ १६ ॥

अर्केन्द्वोः पथिके क्रान्तिस्तद्विदा तद्विधे गती ।
अपि ग्रहस्यैव कल्प्ये प्राग्गतिश्चेति वक्रता ॥ १७ ॥
मन्दाधिकोनभोगे स्यात् तद्योगो गतगम्यजः ।
अवक्रिणोर्द्वयोरेवं वक्रिणोस्तु विपर्ययात् ॥ १८ ॥
प्राग् गत्याऽल्पधिकेऽतीतो भावश्हीने तु वक्रिणः ।
गत्यन्तरेण तद्वक्राद्नुलोमविलोमयोः ॥ १९ ॥
दिनादि वक्रिण्येतस्मिन् भुक्तियोगेन नारद ।
तात्कालिकौ ग्रहौ तेन छेद्यमिच्छामितिर्हरः ॥ २० ॥
स्वभुक्तौ फलमिष्ट वा तौ भवेतां मुहुर्मुहुः ।
क्रान्तिर्दिनादि गणयन् क्रान्तिसाम्यं विचारयेत् ॥ २१ ॥
क्रान्तिर्यदाऽपनीतेन्द्वोः स्फुटक्रान्तिर्गतैष्यजा ।
कल्पोजयुग्मपदजा युग्मौजपदजेति हि ॥ २२ ॥
सूर्यक्रान्त्यधिकोनेन्दोः शोध्यक्षेपात् तदा तु सा ।
पात ओजपदेऽल्पा चेद्दामं त्वन्यपदेऽङ्गवा ॥ २३ ॥
परमक्रान्तिजीवाप्ती क्रान्तिज्या विज्यया फलम् ।
तच्चापान्तरमर्धं वा शराल्पं गौतगो. फलम् ॥ २४ ॥
तत्संस्कृतेभ्यः क्रान्ती ते समे यावत् पुन. पुनः ।
उपक्रमोपसंहारग्रहान्तरकलादिकम् ॥ २५ ॥
तद्भक्त्या परमे हीने भावी पातो गतोऽधिके ।
पातश्च मध्यकालश्च क्रान्तिसाम्यमथापि वा ॥ २६ ॥
चतुःशती शताल्पो वा ततोऽनल्पार्धमन वा ।

क्रान्तिगत्यन्तरं षष्टिर्मानैक्यार्धमितिः फलम् ॥ २७ ॥
इच्छास्थित्यर्धनाड्यः स्युस्तयोः काले च मध्यमे ।
निर्गमश्च प्रवेशश्च पातस्याथ विबुध्यताम् ॥ २८ ॥
मत्योरैक्यं चान्तरं वा गत्यन्तरमितीरितम् ।
न चेत् क्रान्त्यन्तरं वादौ त्वन्तरैक्यं न मानयोः ॥२९॥
स्यादेतत् प्रथमप्रश्ने तूर्णीं गत्यन्तरं यतः ।
कथितं तत्क्रान्तिभुक्ती गत्यैक्यं च न संस्थितिः ॥ ३० ॥
एवं चेद्ग्रहयोर्मध्यं मानैक्यार्धं भवेद्द्वये ।
स्यात् तदा समलिप्तौ तौ मध्यकालौ यदाऽपि च ॥३१॥
क्रान्तिर्न कारणं यस्मात् तस्मादेतन्न संमतम् ।
उपायः क्रान्तिसाम्यार्थं कश्चिदत्र निरूप्यते(१) ॥ ३२ ॥
तत्र स्नानेन दानेन दत्तश्राद्धजपादिभिः ।
यत् प्राप्यं सुमहच्छ्रेयस्तत्कालज्ञानतोऽपि च ॥ ३३ ॥
अविशेषेण सर्वाणि नक्षत्राणि व्रतानि तु ।
रात्र्यर्धव्यापिनक्षत्रे कुर्याद्वा तदुपस्थिते ॥ ३४ ॥
सर्वत्र याः संनिहिता नाड्यस्तास्ताः सुपुण्यदाः ।
त्रिधा विभज्य रात्रिं तां मध्यांशे यत्र तारकम् ॥ ३५ ॥
उपोषितव्यं यद्यत्र येनास्तं याति भास्करः ।

---

(१) २ पुस्तकेऽधिकः पाठः ।
दिग्भेदेऽपीति दिक्तौल्यमेतावत् कल्पमेव च ।
प्रज्वलज्ज्वलनाकारे काले यावत पतत्यसौ ॥

योगा अविद्धया युक्ता ग्राह्या तु द्वादशीव्रते ॥ ३६ ॥
ज्येष्ठा श्लेषा रेवती च पादा अन्त्या भसन्धयः ।
तेषां च तत्परर्क्षाणामन्त्या आद्याश्च षोडश ॥ ३७ ॥
भसन्धयश्च गण्डान्ताः सर्वकर्मसु वर्जिताः ।
यथैव लग्नगण्डान्ते नास्ति जीवे विनिर्गतिः ॥ ३८ ॥
तथैव तिथिगण्डान्ते नास्ति दौर्बल्यशालिनी ।
प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रतेषु च ॥ ३९ ॥
अभावे द्विगुणच्छायाव्यापिन्यां काल ईदृशे ।
दिवा नक्तं चरेद्र्वाग्व्यापिन्यां वा तथा ततः ॥ ४० ॥
उपवासदिने रात्रौ स्यान्नक्तं हरिवासरे ।
एकभुक्तेन नक्तेन तथैवायाचितेन च ॥ ४१ ॥
उपवासेन दानेन मन्त्रधा देशिको भवेत् ।
व्रतं चैव द्विजे चोक्ता न (१)याचेत व्रतं ततः ॥ ४२ ॥
मध्याह्नव्यापिनी तद्वदेकभुक्तव्रतं प्रति ।
उपवासदिनेऽप्येवं पूर्वाह्णव्यापिनी मुने ॥ ४३ ॥
द्युरात्रव्यापिनी ज्येष्ठा व्रते सा तदुपस्थिता ।
ज्येष्ठोपवासे पूर्वविद्धा सा ग्राह्या चास्तगामिनी ॥ ४४ ॥
तद्वैक्ये परविद्धा सा क्षीयमाणेन तन्मतम् ।
ओजयुग्मे तिथिः पूर्वा परिविद्धा च पक्षयोः ॥ ४५ ॥
व्रतोपवासादौ ग्राह्या वृद्धिह्रासौ च कारणम् ।

---

(१) न याचेत कुतश्चन इति २ पु० पा० ।

पूज्या स्वल्पाऽपि सर्वत्र या तिथिर्वृद्धिगामिनी ॥ ४६ ॥
महत्यपि न सा पूज्या या तिथिः क्षयगामिनी ।
व्रतादौ त्रिमुहूर्त्ताऽपि स्वीकार्या वृद्धिगामिनी ॥४७॥
तत्र व्रतादि कुर्वीत वृद्धिह्रासादिकारणम् ।
यदा पक्षक्षयं याति तदा स्यादापराह्णिकी ॥ ४८ ॥
उदयास्तगता पूज्या तिथिर्वृद्धिक्षये तिथेः ।
व्रतस्वीकरणे चैतदुक्तं श्लोकचतुष्टयम् ॥ ४९ ॥
गृहीत्वोदङ्मुखं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वासं कल्पयेद्बुधः ॥ ५० ॥
मैत्रे मुहूर्त्तमेतच्च कार्यं नो चेद्वृथा फलम् ।
आपदश्चान्तिकादश्या याम्यायनदिने तथा ॥ ५१ ॥
चातुर्मास्यव्रतं सर्वं स्वीकार्यं भुक्तिमुक्तिदम् ।
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ॥ ५२ ॥
ब्रह्मचर्यमधःशय्या नक्तभोज्यं सदाचरेत् ।
दिवानिद्राऽनृतं द्यूतं ताम्बूलं मद्यमासवम् ॥ ५३ ॥
कांस्यं मांसं मसूरं च चणकं कोद्रवं तथा ।
एकं मधु परान्नं च सुरा चौद्रं च मैथुनम् ॥ ५४ ॥
घसदज्जलपानं च लोभं वितथभाषणम् ।
क्षारं प्रतिग्रहं तैलं तिलपिष्टमहंकृतिम् ॥ ५५ ॥
व्यायामं व्यवसायं च कामं क्रोधं मदं तथा ।
दम्भं मोहं च मात्सर्यं तिलमुद्गादिभक्षणम् ॥ ५६ ॥

पुनर्भोजनमभ्यङ्गं पट्चिंशच महामुने ।
उपावासदिनात् पूर्वं परा ह्रे च विवर्जयेत् ॥ ५७ ॥
असकृज्जलपानं च कुर्यात् पूर्वापराह्लयोः ।
एकादश्यां निराहारः स्थित्वा चैव परेऽहनि ॥ ५८ ॥
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥ ५९ ॥
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
सङ्कल्प्य पारणां चेति मन्त्राभ्यां क्रमशो मुने ॥ ६० ॥
एकादशीं प्रति स्त्रीणां शूद्राणामप्ययं विधिः ।
त्रयोदशी च दशमी कृष्णप्रतिपदा मुने ॥ ६१ ॥
रात्रिद्वयव्यापिनीं तां स्वीकुर्यात् सतत मुने ।
घटिकैकाऽप्यमावस्या स्याच्चेत् प्रतिपदिष्यते ॥ ६२ ॥
सैव व्रतोपवासादौ परविद्धा हि सोतना ।
तृतीया पूर्णिमा तद्वत् पूर्वविद्धा मुनीश्वर ॥ ६३ ॥
द्विमासिक्य पूर्वविद्धा अपि वा तदसंभवे ।
द्वादशी पूर्वविद्धैव सर्वदा मुनिसत्तम ॥ ६४ ॥
व्रतादौ पूर्वविद्धैव भवेत् कृष्णा चतुर्दशी ।
कृष्णाष्टमी क्षीयमाणा यद्येतेनान्यथा मुने ॥ ६५ ॥
व्रतादौ क्षीयमाणस्तु परविद्धोऽसितेतरः ।
ग्राह्यः शुक्ले वर्द्धमान इति वा नान्यथैव तु ॥ ६६ ॥
शुक्लतृतीया वैशाखे पूर्वविद्धैव साऽन्यथा ।

विनायकचतुर्थी च तथा भाद्रपदेऽमला ॥ ६७ ॥
मध्याह्ने त्वनतिक्रान्ते यद्येवं स्यान्मुनीश्वर ।
स्त्रीकर्तृकोपवासे तु तद्विधे तु तदुत्तमे ॥ ६८ ॥
ते चापराह्णव्यापिन्यौ परिशुद्धे सुशोभने ।
दिने पूर्वार्धगामिन्यौ कलयावसरे द्रुमे ॥ ६९ ॥
तयोः सत्त्वोश्चापराह्णव्यापिन्योश्चापि ते न हि ।
तृतीयादौ षडंशं तु पूर्वं व्याप्यैव दूषयेत् ॥ ७० ॥
अपराह्णस्योर्जशुक्ले चतुर्थी नागसंज्ञिता ।
परोपवास एवं चेन्न चेत् पूर्वैव गृह्यते ॥ ७१ ॥
नास्मिन् विचार्ये ह्यानिवृद्धी चतुर्थ्यन्या तु नेदृशी ।
चलत्वमुत्तराविद्धा ह्युपवासाय चाचलम् ॥ ७२ ॥
तदन्ते पारणं तच्चेत् प्रदोषव्यापिनीति च ।
सर्वमन्यद्व्रतं कार्यं नित्यमेकादशीव्रतम् ॥ ७३ ॥
पुण्याङ्गना विना योनिजातिभेदोऽत्र नोच्यते ।
यदा नारी व्रतं कुर्याज्जीवद्भर्तर्युपोष्य चेत् ॥ ७४ ॥
पत्युरायुःक्षयं कृत्वा स्वयं च नरके व्रजेत् ।
पत्युस्त्वभोजनात् स्त्रीणां भोजनत्याग एव हि ॥ ७५ ॥
व्रतं शुश्रूषणं तस्य तदाऽऽज्ञापालनं चरेत् ।
कामाकामात् कृतं पापमार्द्रशुष्केन्धनं क्रमात् ॥ ७६ ॥
भस्मसात् कुरुते वह्निरेकादश्युद्भवो मुने ।
यावन्त्यश्नाति सिक्थानि मोहाद्वा हरिवासरे ॥ ७७ ॥

व्याधितो वाऽपि तावन्ति व्रजेत् पापानि नारद।
प्राशयेन्नवनीतं वा नैकादश्यां म्रियन्नपि ॥ ७८ ॥
योगितोऽपि महात्मानो नाश्नन्त्यस्मा व्रते रताः।
एकादश्युपवासेन म्रियते यदि मानवः ॥ ७९ ॥
क्षुधार्त्तः शिवसालोक्यं गच्छेन्निष्कल्मषं मुने।
विस्मृत्यैकादशीं मोहाद्द्वादशीमरतः स्थिता ॥ ८० ॥
उपोष्या द्वादशी तत्र यदिच्छेत् परमं पदम्।
शोके वा यदि वा मोहे वर्षे वा समुपस्थिते ॥ ८१ ॥
सूतके मृतके वाऽपि न त्याज्य द्वादशीव्रतम्।
सूतकान्ते हरिं विप्रान् पूजयेद्भोजयेत् स्वयम् ॥ ८२ ॥
विधिनोपवसेद्विष्णुं विप्राँश्चान्याँश्च पूजयेत्।
काम्यव्रतेषु सर्वेषु सर्वत्रैवं विधिस्त्वयम् ॥ ८३ ॥
तथाऽपि गणयेत् काम्ये न तथाकृतमेव तु।
असामर्थ्यशरीरश्चेत् काम्यव्रतमुपस्थितम् ॥ ८४ ॥
पुत्रेण धर्मपत्न्या वा कारयेन्मुनिवल्लभ।
पत्नीव्रतं पतिः कुर्यादसामर्थ्ये तयोर्मिथः ॥ ८५ ॥
अन्यथा व्रतभङ्गेन त्वौषधैश्चैव सूतकै।
यः कुर्यात् पुत्रवित्तादिकाम्यमेकादशीव्रतम् ॥ ८६ ॥
आव्रतोद्यापनात् तस्य नामानि त्रीणि नारद।
पुत्रवान् धनवान् मुक्तः पर्यायास्तेष्वनेकशः ॥ ८७ ॥
दिनत्रयेऽपि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः।

एकादश्यां तु कृष्णायां शुक्रार्कदिवसे गृही ॥ ८८ ॥
न पारणं नोपवासं कुर्यात् माते च सम्मतम् ।
एकादशीव्रतस्यैवं लक्षयित्वा यथोचितम् ॥ ८९ ॥
नामभिस्त्रिभिरुक्तैश्च कथान्ते सफलं व्रती ।
उक्तदोषेषु चानुक्तवेधेषु व्रतमाचरेत् ॥ ९० ॥
व्रतं तत्पारणं तत्प्राकृतिविसंख्यानि हन्ति च ।
तेषु नक्तं हविष्यान्नमन्नोदनफले तिलम् ॥ ९१ ॥
क्षीरान्नाद्यं पञ्चगव्यं प्राणायामचयं क्रमात् ।
एवं यदैव वा गच्छेदुत्तरोत्तरमुत्तमम् ॥ ९२ ॥
व्रतभङ्गो हि नैवं चेदव्रतं नैक उपस्थिते ।
अन्यं कुर्वीत दानर्चाहोमैरन्यं च वर्त्तयेत् ॥ ९३ ॥
वानप्रस्थो ब्रह्मचारी मुमुक्षुर्यतिरित्यपि ।
वार्च्यः सर्वाश्रमस्थोऽपि वा कुर्वन् नित्यव्रतं मुने ॥ ९४ ॥
न तस्य सन्त्यक्तदोषो यत्तद्वन्त्यं च नोचितम् ।
परविद्धाऽपि सा कार्या नारदैकादशी तिथिः ॥ ९५ ॥
पूर्वविद्धाऽपि सा ग्राह्या परतो द्वादशी न चेत् ।
शुद्धाऽधिका विद्धसमा चोत्तराऽनधिका यदि ॥ ९६ ॥
पूर्वा पुण्या गृहस्थानां यतीनामुत्तरा स्मृता ।
वृद्धाधिकोत्तरा हीना व्यवस्थेयं यदीष्यते ॥ ९७ ॥
उत्तराऽनुक्तरूपा सा सर्वेषामुत्तरैव चेत् ।
शुद्धहीना शुद्धसमा विद्धहीना च नारद ॥ ९८ ॥

सर्वेषामविशेषेण पूर्वैव फलदायिनी ।
फाल्गुनद्वादशी पुष्ययुक्ता गोविन्दसंज्ञिका ॥ ९९ ॥
शुक्ला शुक्ले द्वादशी तु माघे भीमाऽभिधा स्वयम् ।
आषाढे शयनाख्या स्यात् प्रबोधाख्या च कार्त्तिके॥१००॥
एकादश्यां द्वादशीपुण्यं यश्चैता दधुरेकशः ।
पारणं द्वादशीविद्धत्रयोदश्यां निहन्ति च ॥ १०१ ॥
द्वादशद्वादशीपुण्यं पराधीयां प्रयच्छति ।
सिंहार्के रोहिणीयुक्ता कृष्णा भाद्रपदाष्टमी ॥ १०२ ॥
रात्र्यर्धपूर्वपरगा जयन्ती कलयाऽपि वा ।
अभावे रोहिणीयुक्ता नभःकृष्णाऽष्टमी यदि ॥ १०३ ॥
मुहूर्तमपि वा श्रेष्ठा सैवाभावे तिथिर्मता ।
कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ॥१०४॥
अभावे केवला सा चेदिति वेदविदो विदुः ।
मध्यरात्रिगता माघे शिवरात्रिचतुर्दशी ॥ १०५ ॥
कृष्णपक्षे जयन्ती च नोपेक्ष्ये विहिते अपि ।
नरस्य द्विगुणा छायामतिक्रम्य यदा रविः ॥ १०६ ॥
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ।
दिनद्वयेऽप्यमावस्या मध्याह्नव्यापिनी यदि ॥ १०७ ॥
पैत्रे दैवव्रते ग्राह्या क्रमात् पूर्वापराऽपि च ।
अमा दूष्या भूतविद्धा मध्याह्नव्यापिनी न चेत् ॥ १०८॥
ग्राह्या त्वमा भूतविद्धा मध्याह्ने प्रतिपद्यदि ।

पूर्वमध्यापराह्णेषु देवमर्त्यपितॄन् यजेत् ॥ १०९ ॥
द्विगुणात्माधिकच्छाये चतुर्थे प्रहरे नरः ।
यः श्राद्धं कुरुते याति नरकं स तदा चिरम् ॥ ११० ॥
अतोऽपराह्णव्यापिन्यां पूर्वस्यां तु तिथिद्वये ।
कुर्वीत पार्वणश्राद्धं सर्वतिथ्यां व्रते रत ॥ १११ ॥
दिनद्वयेऽपि सा नो चेदपराह्णे मुनीश्वर ।
साऽन्याऽपि परविद्धैव कुरुते स्वस्तिकं ततः ॥ ११२ ॥
शुक्लाद्यं शुक्रवारं च त्यजेच्छ्राद्धे स्वजन्मभम् ।
आमश्राद्धे दैविके तु पूर्वाह्णे ग्रहणे निशि ॥ ११३ ॥
पूर्वाह्णे लग्नकाले च वृद्धिश्राद्धं विधीयते ।
निशाऽपि पुत्रोत्पत्त्यादिनिमित्तं श्राद्धमिष्यते ॥ ११४ ॥
विना प्रातरादिनार्धोद्दिष्टं विधीयते ।
आमेन वा हिरण्येन श्राद्धं माध्याह्निकं विदुः ॥ ११५ ॥
चतुर्दश्येव वर्ज्या स्यात् काम्ये नित्ये च नैमित्तिके ।
एतयोस्तिथिवारर्क्षमन्यत् सर्वं च पूज्यते ॥ ११६ ॥
प्रत्यब्दं प्रतिमासं वा मृताहश्राद्धकर्मसु ।
सायन्त्युत्तराभावे पूर्वविद्धाऽपराह्णिकी ॥ ११७ ॥
सायन्तनीयाभावे स्यात् परविद्धैव शस्यते ।
नित्यनैमित्तिकश्राद्धं दर्शश्राद्धादि चेतरत् ॥ ११८ ॥
अधिमासे न कर्तव्यं सेवाद्यं देवतादिषु ।
नभस्यकन्यकोर्ध्वार्धभागयोगेऽवधार्यते ॥ ११९ ॥

श्रावं त्वपरपक्षाख्यं नभस्यर्धं दलेऽन्यथा ।
मीने धनुषि सिंहार्के न व्रतारम्भ इत्यपि ॥ १२० ॥
माघे मासि न सिंहेज्ये चेति केचिन्न तन्मतम् ।
अनेऽन्नदानग्रहणं(?) व्रतं कार्यं मनीषिभिः ॥ १२१॥
सूतके मृतके वाऽपि केचिदार्त्तव एव च ।
पूर्वं पूर्वः शुभः कालः सूर्यग्रहणसूतके ॥ १२२ ॥
सोमग्रहणकालेषु श्लाघ्यः कालः परं परः ।
नाद्याद्यामत्रयादर्वाग्ग्रहणे चन्द्रसूर्ययोः ॥ १२३ ॥
विशुद्धमण्डलं दृष्ट्वैवोर्ध्वं वा प्रहरत्रयात् ।
रात्रौ स्नानं न कर्त्तव्यं दानहोमबलिक्रियाः ॥ १२४ ॥
प्रतिष्ठाजातकोद्वाहयज्ञग्रहणवर्जितम् ।
मध्यन्दिने पर्वसन्धिस्तत एवमथापि वा ॥ १२५ ॥
याग. स्वदिवसे कार्यः परतश्चेत् परेऽहनि ।
सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक्पर्यावर्त्तनाद्रवेः ॥ १२६ ॥
सा पौर्णमासी विज्ञेया यज्ञकालविधौ विधिः ।
यागात् पूर्वदिने कुर्यादन्वाधानं द्विजोत्तम ॥ १२७ ॥
अन्वाधानं तु सङ्कल्पप्राणायामपुर.सरम् ।
अन्वाधानं पाकहोमं नित्यहोमादनन्तरम् ॥ १२८ ।
कुर्यान्नैमित्तिकं कर्मानन्तरं नित्यकर्मणः ।
पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ॥ १२९ ॥
बह्वृचः श्रवणे कुर्युः सस्यसंपत्तिदर्शने ।

विशिष्टः श्रावणो मासः स्वाध्यायनामुपक्रमे ॥ १३० ॥
तद्दर्शोपान्तदर्भैस्तु कुर्यात् कर्माणि वत्सरम् ।
अयने विषुवे चैव शयने बोधने हरेः ॥ १३१ ॥
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।
कार्त्तिके नवमी शुक्ला तृतीया माधवे तथा ॥ १३२ ॥
माघे मन्वादयः कृष्णे नभस्ये च युगादयः ।
आश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ॥ १३३ ॥
चैत्रे तृतीया ज्येष्ठस्य पूर्णिमा द्वादशी शुचौ ।
चतस्त्र फाल्गुने द्वादशूर्जे कृष्णाऽष्टमी मुने ॥ १३४ ॥
मन्वन्तरादयस्तेषु तेषामेवोद्भवः क्रमात् ।
नभःफाल्गुनयोः पञ्चमेका चैकादशी सिता ॥ १३५ ॥
वैशाखज्येष्ठपौषाणां पूर्णिमा फाल्गुनोर्जयोः ।
माघामलद्वादशी च नभस्यामलचन्द्रिका ॥ १३६ ॥
शुचिर्लिंगोऽष्टमी कृष्णा द्वितीया च युगेऽमला ।
मन्वन्तरान्तस्तेषामेष्वनध्यायेषु निर्गमः ॥ १३७ ॥
यथाऽऽज्ञप्तजनो मन्त्री राजानं प्रतिगच्छति ।
तथा मन्वादयः सर्वे ब्रह्माणमुपतस्थिरे ॥ १३८ ॥
तिस्रोऽष्टका अनध्यायाः सप्तम्याद्या मुनीश्वर ।
पर्वगादिषु मासेषु विषुवायनसंयुताः ॥ १३९ ॥
प्रथमा इति पञ्चाशत् तिथयः पार्वणे मुने ।
उपक्रमाच्च त्रिदिनं पूर्वाः पञ्चदशापि च ॥ १४० ॥

उपक्रमेण पश्यन्तं सौख्यमुत्सर्जनात् परम्।
रात्रयः शुक्लपक्षेषु कृष्णपक्षेषु कृत्स्नशः ॥ १४१ ॥
अनध्यायस्तथाऽन्ये ये ते च दृष्टप्रचोदिताः।
तथा सेयं मुहूर्त्ताख्या याऽनध्यायस्य साऽपि च ॥१४२॥
षडङ्गाध्ययन इत्युक्ताः स्वाध्यायाः सकला अपि।
अधिकर्त्तव्यमेवाङ्गमङ्गित्वैकप्रयोजनात् ॥ १४३ ॥
श्रुतेस्तद्व्यतिरेकेण त्वङ्गित्वाभावसम्भवात्।
पत्रादिमध्यान्त्योपान्त्या अङ्गानामङ्गिनामपि ॥ १४४ ॥
अनध्यायः प्रदोषस्य संध्यास्त्रिर्मध्यमा निशा।
त्रयोदशी चतुर्थी च सप्तमी कालयाऽपि च ॥ १४५ ॥
रात्रिं स्मृति मौनी स्यात् प्रदोषो यदि तत्र सः।
रात्रेर्दिनचतुर्थो वा प्रहरः कथ्यते बुधैः ॥ १४६ ॥
तावानेव प्रदोषस्य पूर्वैस्त्रिंशांशकैर्मुने।
आद्यास्त्रिंशांशनाडयस्य चतुर्थी तूत्तरे मुने ॥ १४७ ॥
प्रदोष. पूर्वरात्र्यर्धं विरामघटिकाऽपि वा।
मध्यन्दिने पर्वसन्धिरित्यादिषु न चिन्तयेत् ॥ १४८ ॥
दिनचपायुक्तदोषं लोकानां त्रिगुणाऽष्टसु।
अर्कमानकलास्तस्य भुक्तिर्येत् षष्टिनाडिकाः ॥ १४९ ॥
संक्रान्तिकालस्तद्बिम्बं यावत् चेन्नद्वयेऽपि स.।
बिम्बमध्यं ग्रहस्यास्ति यत्र तत्र स्थितश्च स ॥ १५० ॥
तस्मिन् परापरक्षेत्रे ग्रहे द्वे तु यथोचिते।

भुक्तचेत्तमभुक्तं तत् तथाऽन्यत्र नारद ॥ १५१ ॥
तिथिनक्षत्रयोगादेर्बिम्बमध्यं प्रबोधकम् ।
शुभाशुभं कृतं तस्मान्नैव चेत् तदन्यथा फलम् ॥१५२॥
संक्रान्तेः प्रागभुक्तर्क्षं सार्धा. षोडश नाडिकाः ।
भुक्तर्क्षे च तावत्य. पश्चादिति हि नाडिकाः ॥ १५३ ॥
यत्र त्रिंशत् संक्रमस्य सर्वकालेषु नारद ।
यायाः संनिहिता नाड्यस्तास्ताः पुण्यतमा मता.॥१५४॥
भुक्तर्क्षे वाऽप्यभुक्तर्क्षे स्नानदानादि कारयेत् ।
पर्याप्तमुभयं रात्रावेव चेत् तत् तथोच्यते ॥ ॥ १५५ ॥
भवनान्तं विम्बमध्यं राज्यर्धात् प्रागुदेति चेत् ।
स्नानदानादिमध्याह्नात् कुर्यादूर्ध्वं गते दिने ॥ १५६ ॥
रात्र्यर्धादुपरि चेत्रे याति चेदन्यथाऽर्यमा ।
अह्न्यागामिनि मध्याह्नात् पूर्वं स्नानादि कर्म यत्॥१५७॥
यद्यर्धरात्र एवं स्यात् संपूर्णे रविसंक्रमे ।
तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु ॥ १५८ ॥
भुक्तचेत्रमभुक्तर्क्षं चोभयं च दिवाऽस्ति वा ।
याम्यायनं विष्णुपदं चाभुक्तर्क्षेऽतिपुण्यदम् ॥ १५९ ॥
षडशीतिमुखं चोदगयनं भुक्तवेश्मनि ।
विषुवत्युभयं तुल्यं सर्वमेतत् पुनान्यतः ॥ १६० ॥
चलसंक्रान्तितन्मात्रः संक्रमोपरि संक्रम (१) ।

(१) 'चलसंक्रान्तिमात्रो संक्रमो य स संक्रम '—पा० २ पु० ।

नान्योऽन्यत्र च तत् चेत्रं नेति तत्क्रान्तिकद्वया ॥१६१॥
भुक्तक्षेत्रमभुक्तं वा विज्ञायाह्नि संभवम् ।
वृथाऽन्यत्र कृतं कर्म भस्मनीव हुतं हविः ॥ १६२ ॥
तदभावे तदासन्नकाले चापि ह्यैतरत् ।
क्रान्तेः पूर्णफलं केन्द्रप्रवेशादुभयं समम्(१) ॥ १६३ ॥
कालस्य निर्णयो ह्येतन्मृगकर्क्योः घपादले ।
अर्काह्ने शुक्लसप्तम्यां पुष्यर्क्षे चोत्तरायणे ॥ १६४ ॥
सप्तमीव्रतमन्विच्छेत् सर्वकार्यार्थसिद्धये ।
अष्टमीनवमीद्वन्द्वेऽर्धनारीश्वरव्रतम् ॥ १६५ ॥
नभस्ये रोहिणी षष्ठी व्यतीपाते यदीरिता ।
पुण्या कपिलषष्ठीह द्वादशी विजया हरौ ॥ १६६ ॥
कार्णमेऽर्के व्यतीपाते ह्यमा पौषी यदा भवेत् ।
अर्धोदयः पुण्यराशिं हरत्यर्धमुपेक्षितम् ॥ १६७ ॥
योगरूपाः पुण्यकालास्तिथ्यादीनां मुनीश्वर ।
काथ्यन्ते तेन येष्वस्ति वेदघोष इति स्थितिः ॥ १६८ ॥
अलं मुहूर्तमात्रं वा स्नानादिभ्यो हि योगजम् ।
रात्रौ दिवा पञ्चदश मुहूर्ताः कुतपोऽष्टमः ॥ १६९ ॥
मैत्रस्तृतीय. पुत्राह्वः पुंनक्षत्राणि च रोहिणी ।
अश्विनी कृत्तिका हस्तस्तथाऽपि च पुनर्वसु ॥ १७० ॥

(१) 'स्वर्धप्रवेशादुभयोः समः'—पा० २ पु० ।

प्रौष्ठपद्द्वितयं विष्णुः केचित् सौम्यमिति स्थितिः ।
इति ते कथितं वत्सान्यच्च वक्ष्यामि तत्त्वतः ॥ १७१ ॥

इति श्रीवृद्धसिद्धान्ते तृतीयोऽध्यायः ॥ ३ ॥

अविक्षेपस्फुटक्रान्तेरुदक्छिन्नस्ततः पुरः ।
उदेति पश्चादेत्यस्तं वा क्षिप्तस्तत्तदन्यथा ॥ १ ॥
पश्चिमस्थः प्रागुदेति पश्चात् प्राक्स्थोऽस्तमेति हि ।
अन्यथा चेदन्यथा दृक्कर्म यत् कल्पितं तथा ॥ २ ॥
विक्षेपस्तत्फलं स्याद्यद्यभा द्वादशोऽङ्गुलम् ।
खमध्यग्रहयोर्मध्यं नतं क्षितिजकल्पना ॥ ३ ॥
तन्नतात् तद्दिनार्धं च फलं प्राक्सिद्धमेव हि ।
ग्रहणादन्ययोगे च कालभेदे तथैव हि ॥ ४ ॥
ग्रहोन्नत्युदयास्तेषु दृक्कर्मादाविदं स्मृतम् ।
क्रमचापोत्क्रमज्याभ्यां क्रान्तिः सचिग्रहस्य च ॥ ५ ॥
त्रिज्या चेन्मध्यदृष्टानां क्षेपलिप्तान्तरे पुनः ।
दृक्कर्मस्थो नतः प्राक्स्थ इव पश्चादिति स्थितिः ॥ ६ ॥
दृश्यते यः क्रान्तिदेशो भेदाभेदे यथाक्रमम् ।
तत्तन्मेरुदिगंशानामल्पः स्याद् दृश्यते तथा ॥ ७ ॥
खखलनं मध्यमछायामधिकस्वल्पमन्यगम् ।
तदर्धमुत्क्रमज्यैषा तादृक् खण्डैर्हि साधिता ॥ ८ ॥
द्वादशीज्या स्मैः खण्डैरुक्तं च धनुरुत्क्रमम् ।

अल्पत्वात् खलनस्त्वेवं क्रमचापं स्मृतं त्विह ॥ ९ ॥
त्रिभशानं मध्यमार्गे महत्खलनसूचकम् ।
क्रान्तिक्रान्त्यूनपरमक्रान्त्योस्त्वेवं तदल्पतः ॥ १० ॥
द्वितीयं मापदृष्टीनां दृक्कर्म मुनिसत्तम ।
द्वितीयमेव दृक्कर्म नेच्छन्त्युत्तमदृष्टयः ॥ ११ ॥
शास्त्रीयव्यवहारो हि लौकिकं निष्प्रयोजनम् ।
केचिदन्येऽपि नेच्छन्ति तादृक्प्रत्यक्षकारणात् ॥ १२ ॥
खमध्यगो मध्यलग्नमुदयात् क्षितिजोदयः ।
षस्तलग्नं सषड्भ तात्कालिकं स्पष्टकालिकात् ॥ १३ ॥
गतागतैर्व्यकालाद्य गतैर्व्यं लग्नमालज ।
लङ्कोदयैर्मध्यलग्न खमध्ये क्षितिजं न हि ॥ १४ ॥
लग्नग्रहाभ्यां कालश्च मुहुर्मुहुरिति स्थितिः ।
सूर्यात् प्राक्पश्चिमार्धे च शुक्लकृष्णे प्रकल्पयेत् ॥१५॥
सूर्यास्तकालिकौ सूर्यादृग्रहौ ज्ञात्वा सषड्ग्रहौ ।
ततस्तत्काललग्नार्थं कृष्णे त्वर्के सषड्भकात् ॥ १६ ॥
चक्रात् तदन्तरप्राणैर्भास्करास्तमनात् परम् ।
स्थिरीकृतैरुदेत्यन्यः शुक्ले कृष्णेऽस्तमेति हि ॥ १७ ॥
दिनरात्रिप्रमाणात् पूर्वापरमार्धोदयात् स्वकात् ।
आसन्नार्कस्य तद्रश्मिच्छन्नो मूढ इतीरितम् ॥ १८ ॥
शुक्ले प्रागुदितप्राणात् कालांशाः षड्भाजिताः ।
कृष्णे तु तौ सषड्भौ तु भास्करोदयकालिकौ ॥ १९ ॥

कार्याः कालांशकास्तद्दृनकास्ते सकृद्द्वयोः ।
सूर्यात् पश्चिमतोऽस्तं यातुयः स चमः स तु ॥ २० ॥
द्व्यंशो स्वमुदयं शुक्रो गच्छत्यन्येऽन्यथा मुने ।
द्वादशात्यष्टिमन्वीशदिक्तिथिः शीतगोः क्रमात् ॥ २१ ॥
चस्तांशा द्वादशाष्टौ च वक्रिणोर्बुधशुक्रयोः ।
तथा महत्त्वादनयोर्दूरत्वादितरस्य च ॥ २२ ॥
मूलात्रयं विशाखार्द्रामित्रदस्राश्विवह्नयः ।
दृश्यन्ते पञ्चदशभिः शेषाण्यष्टिभागकैः ॥ २३ ॥
मघाचतुष्कं श्रवणाद्वयं धाष्टभवासवाः ।
पुनर्वसुभिजिच्चात्र मृगव्याधप्रभञ्जनः ॥ २४ ॥
अगस्त्यो ब्रह्महृदयं शक्रांशैरनिलेन्दुभि ।
मृगशीर्षं च भरणी पुष्योऽग्निः सप्तकांशकैः ॥ २५ ॥
तत्त्वाधिकांशा यस्योदक्क्षेपांशा नास्तगो भ्रुवम् ।
एभ्योऽधिकोनैः कालांशै. क्रमाद्दृश्या अदर्शना. ॥२६॥
तदन्तराद्दिनादिः स्यात् कालो गत्यन्तरैक्यजम् ।
तत्कालांशोदयप्राणा स्वांगराशिकलामितिः ॥ २७ ॥
फलेच्छया तत्त्वेत्रांशैर्दृश्यताऽदृश्यताऽपि वा ।
सैव व्येकोदितांशैस्तु दृक्सिद्धं स्यात् क्वचिन्मुने ॥ २८ ॥
अल्पायुषां पाखण्डिनां गन्धर्वनगरादिवत् ।
खमध्यक्षितिजे दोःकोट्याश्रयैर्मौर्विके तयोः ॥ २९ ॥
दशाशङ्कुर्मुने छाया व्यवहार इतीर्यते ।

त्रिज्या दृग्ज्या भवेच्छाया यदि कर्णोऽत्र कोटिजा ॥३०॥
तत्स्वज्यायां कोटिजीवा परमायां तु सोद्भवा ।
त्रिज्यायां कोटिजीवायां कियतीति विशेषतः ॥ ३१ ॥
परिधिः कियतीत्येवं शङ्कुच्छेद इतीरितः ।
स्वदिनव्यासार्धकर्णौ तौ च शङ्कौ स एव च ॥ ३२ ॥
कियान् स तस्मिंस्त्रिज्यायामुन्नतज्येति साधिता ।
त्रिज्याधिकोनोदृग्वाक् चरमौर्व्योऽन्त्यमौर्विका ॥३३॥
मध्यंसितिजमध्यैक्यात् सा नतज्या मता दिवा ।
तदुत्क्रमधनुःप्राणास्तत्प्राणा न प्रभा यतः ॥ ३४ ॥
व्यासार्धे तत्स्वजीवायां त्रिज्यया च समा मुने ।
कल्प्यः शङ्कुस्तदा तत्स्त्रिज्यश्चेद्द्वादशांगुलः ॥३५॥
छायाकर्णौ वा दिनार्धे क्रान्त्यक्षाभ्यां भुजांशकैः ।
शङ्क्वोन्नतूनविम्बार्धयुतिच्छायानतासुभिः ॥ ३६ ॥
कृष्णे शुक्लेऽपि पक्षे प्रागिनेन्द्वोर्यन्न भिद्यते ।
तज्ज्योनं च दिनार्धांशं नतत्वं चापि तत् किल ॥३७॥
अनुक्तं यत एवैतदन्यप्रश्नचतुष्टये ।
अविम्बकस्तु दर्शेऽधःस्थितः सूर्यान्न दृश्यते ॥ ३८ ॥
पौर्णिमायां तदन्तःस्थैः संपूर्णः सूर्यरश्मिभिः ।
अन्यत्र यावान् विप्रकर्षस्तावच्छुक्लं त्रिधोर्विधिः ॥ ३९ ॥
चन्द्रादान तदाशायां समो दक्षिणतः शशी ।
अष्टाध्यायी शौनकस्य मेरुवासीत्यतः समम् ॥ ४० ॥

ह्रासिवृद्धी ययोर्दिवचरेणास्य तिथिं प्रति ।
क्षीयमाणकला देवा अमन्त्येककलं तथा ॥ ४१ ॥
वर्धयन्ती क्षीयतेऽसौ एवं वेद न हि कश्चित् ।
अविम्बनानामन्येषां दूरस्थत्वादिदं न हि ॥ ४२ ॥
येन दर्पणवत् स्वच्छा जायन्ते तेषु चांशवः ।
लाञ्छनं प्रतिबिम्बं गोर्गौमतीन्द्राविनांशुभि. ॥ ४३ ॥
चन्द्रेण शौक्ल्यं वाऽन्येषां तद्दर्शेऽप्यस्ति यत् ततः ।
विम्बं सितासिते पक्षे व्यर्केन्दोरर्कभागतः ॥ ४४ ॥
रवीन्दुमध्यक्रान्तिज्या त्रिपुवत्कर्णसंगुणा ।
मध्याह्नाच्चन्द्रमङ्क्वाप्ता उत्तरार्वाग्विधौ रवे. ॥ ४५ ॥
कृत्वा धनं चाचभायां भुजोऽर्कादिन्दुदिङ्मुखः ।
यस्माल्पा ज्या खमध्येन्दुच्छाया कर्णहृता तथा ॥ ४६ ॥
द्वादशघ्नतजीवायाः कल्पना या रवीन्दुवत् ।
खमध्याद्विपुवत्कच्चां मध्यतो ज्यां निरस्य हि ॥ ४७ ॥
भुजा अपि लयं यान्ति कर्णौ द्विदशकोटिज ।
अर्कासंस्थितदिङ्मध्याद्बाहुशङ्कुकथा भवेत् ॥ ४८ ॥
प्राक्पश्चात्समुखौ शुक्ले कृष्णे कोटिं प्रसार्य तत् ।
बाहुकोट्यग्रगं कर्णाकोट्किर्णयुतेर्विधोः ॥ ४९ ॥
बिम्बं तदूर्ध्वमानेन लिखेत् कोट्याश्रयेण च ।
प्राग्रेखे याम्यरेखे च तदन्तर्मध्यसरस्यतः ॥ ५० ॥
कर्णेन तन्मुखं शुक्लं कृष्णं वा परभागतः ।

तदा दत्त्वाऽग्रयाम्योदङ्मध्यमत्स्यद्वयस्य च ॥ ५१ ॥
मध्यसूत्रयुतेश्चापं बिन्दुनिःसृग् लिखेदिह ।
कोट्या साधितयाम्योदग्रेखान्ते शङ्कुरुन्नतम् ॥ ५२ ॥
अनेकगुणकच्छेदभवांशाँश्छेदसंमितान् ।
द्वन्द्वगो नाशयेद्वाऽपवर्त्तयेदिच्छयैव तु ॥ ५३ ॥
बाहुसिद्धो हि यश्छेदस्तदुत्पत्तौ हरा गुणा ।
गुणगुण्या हरा इत्थं विक्षेपा अन्यथा यदि ॥ ५४ ॥
तावत् स्वदेशलम्बज्या खव्यासार्धं यथा तथा ।
तां त्रिज्यां कल्पयेच्छायां व्यवहारसुखप्रदम् ॥ ५५ ॥
तथा क्रान्तिज्यका सत्यग्रज्येति परिकीर्त्तिते ।
क्रान्तिज्याविषुवत्कर्णाहताऽग्रज्याऽपि भास्करैः ॥ ५६ ॥
सा चेत् त्रिज्येष्टभाकर्णास्तदा ग्राह्योऽङ्गुलादिका ।
क्रान्तिज्या चेष्टकर्णाघ्नी लम्बज्याप्ताऽङ्गुलादिका ॥५७॥
स्वशङ्कुतुल्यक्रान्तिज्याग्राङ्गुलं विषुवश्रवः ।
अर्थाङ्गुलफलं वा मध्येषुकर्णोन्मितीतरौ ॥ ५८ ॥
मध्यात् प्राक् पश्चिमागा या सममण्डलमुच्यते ।
सायं प्रातर्मध्यहृत्स्वमेरुध्रोदयदृग्द्वयम्(१) ॥ ५९ ॥
उदग्भागस्था प्राच्यपरा या रेखा सममण्डलात् ।
उन्मण्डलं तयोर्मध्यं सर्वत्र विषुवत्प्रभा ॥ ६० ॥
विषुवन्मण्डलादेषा छायाग्रे विषुवाऽत्र हि ।

---

(१) सा ध्रुवनपोऽरत्यग्त मद्भेदद्दृग्द्वयम् । इति—पा० २ पु० ।

लघुच्छायाग्रविषुवन्मध्यज्यायार्धमुच्यते(१) ॥ ६१ ॥

सा रेखोन्मण्डलाङ्काग्रे सदाऽन्याग्रा ह्यतिष्ठत ।
उन्मण्डलादुदक्छायायाम्यक्रान्त्याग्रपागुदक् ॥ ६२ ॥

भुज इत्युच्यते मध्यं समण्डलभाग्रयोः ।
अतो माध्याह्निकी छाया नित्य माध्याह्निकी द्विज ॥ ६३ ॥

यदा दिनार्धेदक्क्रान्तिः स्याच्छाया तदा न हि ।
रवेः शङ्क्वग्रसाम्यत्वाच्छायास्तत् प्रतिदृश्यते ॥ ६४ ॥

यदोदक्क्रान्तिरल्पोना तदोदगुदितो ग्रहः ।
उदगस्तं यथादृष्टि सममण्डलमेव च ॥ ६५ ॥

क्रान्तिज्या विषुवच्छाया यदि स्याद्विषुवश्रवः ।
सममण्डलशङ्कुस्यच्छायाकर्णौ तु पूर्ववत् ॥ ६६ ॥

अथवा द्वादशाभ्यस्ता लम्बाक्षज्याविभाजिता ।
सममण्डलगे सूर्ये कर्णौ क्रान्तिज्यया सकृत् ॥ ६७ ॥

छायाकर्णविभार्या तदाऽग्रावधजः स तु ।
सममण्डलशङ्कुर्वा त्रिज्या तेनार्कताडिता ॥ ६८ ॥

शङ्कुर्याम्योत्तरा त्रिज्या कल्प्यार्धं तत्कृतेस्तथा ।
दोःकोटिमध्यज्यावर्गं तन्मध्ये साधंमं यत ॥ ६९ ॥

पूर्वापरां कोटिकृतिं तदेव मनुतान्मुने ।
दोर्ज्याचभाकोटिकृत्योः कल्प्या त्रिज्याकृतिर्युतिः ॥ ७० ॥

अर्कच्छायार्कवजज्ञेया यदा तावत् तदाऽग्रजा ।

---

(१) इष्टच्छायाविषुवन्मध्यमार्धेन युतो इति—पा० २ पु० ।

फलमित्युच्यते तावत् तद्व्यचचितिजान्तरम् ॥ ७१ ॥
त्रिज्यावर्गार्धमध्यार्धराचिक्षाऽवर्गमेव तु ।
अग्रज्यावर्गहीनं तत् कोणार्कोदयमध्यगम् ॥ ७२ ॥
तत्कालविभजावर्गो यदि शङ्कुकृतिर्भवेत् ।
कोटिज्याकृतिरेषा हि कार्णोत्याहुरागमाः ॥ ७३ ॥
फलवर्गो बाहुवर्गः कर्णः शङ्कुद्वयोद्भवः ।
स कोणस्थग्रहो व्यचचितिजान्तर एव हि ॥ ७४ ॥
सदकफलः स्वशङ्कुः स्वखार्धफलवर्जितः ।
ऊर्ध्वाधःस्थं स्वकं व्यचचितिजाद्यदवाग्दृक् ॥ ७५ ॥
याम्यायां विदिशोः शङ्कुः स शङ्कोर्दक्षिणोत्तरा ।
मध्यच्छायातो भुजज्या सौम्यतो दक्षिणोत्तरा ॥ ७६ ॥
याम्यतोऽचक्रान्तिरखा अलज्या लम्बजा यदि ।
रवौ चरत्युत्तरयोः प्राग्वत् कोणाचभाद्युतिः ॥ ७७ ॥
द्वादशाचप्रभा क्रान्तिरेवं मेषादिगो रविः ।
कर्कादौ प्रोज्झ्य चक्राधात् तुलादौ भार्धसंयुतः ॥७८॥
मृगादौ प्रोज्झ्य भगणात् बाहुर्गम्यादियुक्पदे ।
चलसंस्कृतसूर्योनच्छायार्के भाजिते क्रमात् ॥ ७९ ॥
प्राक्पश्चान्मध्यरेखातो देशः स्वीयस्तदन्तरम् ।
देशान्तरफलं भानोर्युतयाऽन्यत् सकलं मुने ॥ ८० ॥
छायार्कक्रान्तिराशाः स्फुटलाः स्वलमिनादिके ।
छायार्के त्वृणमूने प्राक् पश्चाद्वक्रं च लम्बते ॥ ८१ ॥

कोणच्छायाकृतिदलात् पदं वा त्रिज्यया हतम् ।
कोणात् कर्णहृते क्रान्तिज्यातच्छाया तथा रविः ॥८२॥
क्रान्तिज्येष्टायाङ्गुलाद्वा भाकर्णाभ्यां समाध्वनि ।
भुजाङ्गुलं भुजच्छाया वेधां कोटिस्तलाविधः ॥ ८३ ॥
शङ्कुपूर्वापरा रेखा तथाऽन्या मध्यमत्स्यजा ।
अद्भिः समीकृतस्थाने कल्पना द्वादशाङ्गुलम् ॥ ८४ ॥
व्यासार्धोङ्गुलमुत्सेधः षडंशव्यासमेव च ।
छायामध्यशलाकाभ्यां छायाग्रज्ञानदुर्बलः ॥ ८५ ॥
मध्ये तुन्नतशिखरं नखाद्रि७२०व्यङ्गुलोचितम् ।
स्वाङ्गुलैनैव सर्वत्राङ्गुलज्ञानकारणम् ॥ ८६ ॥
सूच्यग्रेणेष्टवृत्तस्य प्रोतेनाङ्कितमध्यगम् ।
स्थापयेत् प्रान्तच्छायां शङ्कोर्यत् तदमध्यतः ॥ ८७ ॥
छायाग्रं यत्र भूहत्ते पूर्वाह्णे प्रत्यगेव तत् ।
मध्यात् तथाऽपराह्णेऽर्कें दिशि शङ्कुं पिधाय च ॥ ८८ ॥
प्राचीं निर्दिश्य भाग्रेण व्यस्तं बाहुं प्रभाग्रत. ।
कोटी यथार्हं संप्रसार्य दो कोट्योर्मार्गगां तथा ॥ ८९ ॥
रेखा प्राच्यपरा कुर्याद्भुजज्ञाने फलं यदि ।
ततस्तयायोर्याम्यगेऽर्के यथैते बाहुरुत्तरा ॥ ९० ॥
प्राचीति वै जायतेऽर्के ततस्तत उदग्गते ।
भुजस्ततो दक्षिणग्रप्रभा प्राच्यग्रदिग्गता ॥ ९१ ॥
अग्रान्तरं तत्प्रबिन्द्वोर्यम्योऽर्कस्तदाचरेत् ।

--

तद्दिङ्मुखं प्रसार्य प्राग्बिन्दुमुद्दं हि मि विपेत् ॥ ९२ ॥
तत्र पूर्वापरा रेखा तन्माध्याद् दक्षिणोत्तरा ।
सममण्डलमितस्थाग्रमार्गेण मुनिसत्तम ॥ ९३ ॥
दिग्यष्ट्यादिको मध्यच्छायाहत्तदत्त यदि ।
अग्रात्रानेन चैवं स्याच्छङ्कुश्चेदुन्नतं किल ॥ ९४ ॥
कालस्तु पञ्चोना नाडयस्तन्मध्यस्तच्चलिप्तिका ।
नाभ्येति क्रान्तिरेकाह्ने मध्याह्ना कलयाऽपि वा ॥ ९५ ॥
अतोऽग्राङ्गुलमेकं वा द्व्यङ्गुल न हि सिद्ध्यति ।
देशाश्च सुस्फुटा एव भवन्ति मुनिसत्तम ॥ ९६ ॥
चतुरस्रं यावदिष्ट तत्कर्णार्धशलाकया ।
कोणं वाऽपि शलाकाभ्यां तात्तीर्भ्यां दिगन्तात ॥ ९७ ॥
यद्वा विस्तरसूत्राग्रदिशोर्मध्ये विदिक्ष्वपि ।
निक्षिप्य चतुरस्रं तु वंशे तु स्थापनादिषु ॥ ९८ ॥
सत्यून्नतेऽर्धनाड्यूने दुर्दशा स्यात् प्रभा मुने ।
दुर्दशाया यथाछाया विन्यसेत् तद्वयादिगम् ॥ ९९ ॥
चापस्थत्रयस्याग्रे छायामर्गा मुनीश्वर ।
ज्यासख्या चतुर्विंशताधिका नतसम्भवा ॥ १०० ॥
तदाधिके क्रमज्या त्रिज्यान्विता हि नतोत्क्रमा ।
चरक्रमज्या सत्रिज्या भवेदन्त्या तत सुत ॥ १०१ ॥
त्रिज्याधिक्रमधनुरेवमुक्तं समासत (१) ।

---

(१) त्रिज्या विक्रमधनुस्तत् त्रिमेण युत धनु । इति—पाठ २ पु० ।

कोणच्छायाकृतिद्दलात् पदं वा त्रिज्यया हृतम् ।
कोणात् कर्णहृते क्रान्तिज्यातच्छाया तथा रविः ॥८२॥
क्रान्तिज्येष्टायाङ्गुलाद्वा भाकर्णाभ्यां समाध्वनि ।
भुजाङ्गुलं भुजच्छाया वेणीं कोटिस्तलाविधः ॥ ८३ ॥
शङ्कुपूर्वापरा रेखा तथाऽन्या मध्यमरसजा ।
श्रङ्गैः ममीकृतस्थाने कल्पना द्वादशाङ्गुलम् ॥ ८४ ॥
व्यासार्धाङ्गुलमुत्सेधः षडंशव्यासमेव च ।
छायामध्यशलाकाभ्यां छायाग्रज्ञानदुर्बलः ॥ ८५ ॥
मध्ये वृन्नतशिखरं नखाद्रि७२० व्यङ्गुलोच्छितम् ।
स्वाङ्गुलेनैव सर्वत्राचाङ्गुलज्ञानकारणम् ॥ ८६ ॥
सूच्यग्रेणष्टकृतस्य प्रोतेनाङ्कितमध्यगम् ।
स्थापयेत् प्रान्ततच्छायां शङ्कोर्यत् तदमध्यतः ॥ ८७ ॥
छायाग्रं यत्र भूहत्ते पूर्वाह्णे प्रत्यगेव तत् ।
मध्यात् तथाऽपराह्णेऽर्के दिशि शङ्कुं पिधाय च ॥ ८८ ॥
प्राचीं निर्दिश्य भाग्रेण व्यस्तं वाङ्कं प्रभायतः ।
कोटी यथार्हं संप्रसार्य दो.कोट्योर्मार्गगां तथा ॥ ८९ ॥
रेखां प्राच्यपरां कुर्याद्भुजज्ञाने फलं यदि ।
ततस्तयायोर्याम्यगेऽर्के वर्धते वाङ्कदत्तरा ॥ ९० ॥
प्राचीति वै जायतेऽर्के ततस्तत उदग्गते ।
भुजस्ततो दक्षिणग्रभा प्राच्यग्रदिग्गता ॥ ९१ ॥
यथान्तरं तथाविन्दोर्यन्मुखोऽर्कस्तदाचरेत् ।

तद्दिग्भुजं प्रसार्य प्राग्विन्दुभुजं हि मि चिपेत् ॥ ९२ ॥
तत्र पूर्वापरा रेखा तन्माध्याद् दक्षिणोत्तरा ।
सममण्डनमेतस्मान्मात्स्येन मुनिसत्तम ॥ ९३ ॥
द्विग्यङ्गुलादिको मध्यच्छायाद्दत्तदल यदि ।
अग्रास्रानेन चैव स्याच्छङ्कुश्चेदुन्नतं किल ॥ ९४ ॥
कालस्तु पञ्चोना नाडयस्तन्मध्यस्तत्त्वलिप्तिका ।
नाश्येति क्रान्तिरेकाह्ने मध्याह्ना कलयाऽपि वा ॥ ९५ ॥
अतोऽग्राङ्गुलमेकं वा द्व्यङ्गुल न हि सिद्ध्यति ।
देशाद्य सुस्फुटा एव भवन्ति मुनिसत्तम ॥ ९६ ॥
चतुरस्रं यावदिष्ट तत्कर्णाधिशलाकया ।
कोणं वाऽपि शलाकाभ्या तावतीभ्या दिगन्तत ॥ ९७ ॥
यद्वा विस्तरसूत्राग्रदिशोर्मध्य विदिश्यपि ।
निक्षिप्य चतुरस्रं तु वंशे तु स्थापनादिषु ॥ ९८ ॥
सत्यून्नतेऽर्धनाडयूने दुर्दशा स्यात् प्रभा मुने ।
दुर्दशाया यथाछाया विन्यस्येत् सद्यथादिशम् ॥ ९९ ॥
चापस्तत्रयस्याग्रे छायामर्गो मुनीश्वर ।
ज्यासख्या चचतुर्विंशत्यधिका नतसम्भवा ॥ १०० ॥
तदाधिक्ये क्रमज्या त्रिज्यान्विता हि नतोत्क्रमा ।
चरक्रमज्या सत्रिज्या भवेदन्त्या तत सुत ॥ १०१ ॥
त्रिज्याधिकक्रमधनुरेवमुक्तं समासत (१) ।

(१) त्रिज्याधिकक्रमधनुरुक्त_मिभेन युत धनु । इति —पा० २ पु० ।

न्यत्र तूल्कमज्याभिरांधिक्यादुभयं तथा ॥ १०२ ॥
शङ्कोस्तज्यांशाङ्गुलैस्तु दृष्टो क्रान्त्या यथोदितम् ।
उदयास्तमनस्थानं मध्यं ज्ञात्वा नतांशकैः ॥ १०३ ॥
तच्चापदिननाडंयशैर्दिङ्मध्ये न प्रभापदम् ।
विभज्य वा कालबोधः कालखण्डं प्रकल्प्य वा ॥ १०४ ॥
निधाय शङ्कुं प्राक्पश्चाच्छङ्कोर्मध्याह्नभागगे ।
कोटिज्यांशाङ्गुलोत्सेधं मध्यं शङ्कोरुपर्यपि ॥ १०५ ॥
ब्रह्माण्डमध्यं सूच्यग्रे शङ्क्वग्रं नाडिकांशतः ।
शङ्क्वग्राच्च प्रभामार्गस्पृक्सूत्रैः कालवेदनम् ॥ १०६ ॥
गोलार्धमध्येव्यासार्धयष्ट्या वा कालवेदनम् ।
क्रान्त्या मध्यनतेन प्रश्नग्रमग्राङ्कनं सुखम् ॥ १०७ ॥
धनुर्वेद्यं विधिः कल्प्यो नतदिश्युपमस्तकम् ।
धरारन्ध्रे मध्यमानं प्रोतयेन्न च मध्यतः ॥ १०८ ॥
लम्बसूत्रेण चक्रस्य क्रमाङ्कैर्ज्ञायते क्वचित् ।
समाङ्कैः कालविज्ञानं मासं प्रत्यनुपाततः ॥ १०९ ॥
चेष्टानुप्रतिनाडीनां पद्मनिश्वासतो यदि ।
कुजो मयूरो वा स्यात् किं तत. शास्त्रलोकगो ॥ ११० ॥
नरं कपिं मयूरं वा स्थूलवेशाद्धरं मुने ।
कारणं दृष्टं पूर्णतलं पृष्ठच्छिद्रं प्रकल्पयेत् ॥ १११ ॥
न्यस्तं तोये च तत् काष्ठं तं बद्ध्वा वदनाद्बहिः ।
तावत्येवाङ्कनं कालश्चित्रेणानेन गम्यते ॥ ११२ ॥

गोमयेञ्जलनिःस्रावं मध्येऽस्तं नमनं तथा ।
लम्बसूत्रं प्रचक्षमानं पश्चाङ्कं च समान्तरम् ॥ ११३ ॥
रक्ततन्त्वादिना यावन्नाडीपश्चान्तरेति यत् ।
ततो निरभ्रे घटास्थान् पूरयेच्चोपकज्जलैः ॥ ११४ ॥
अमलेऽम्भसि वा कुण्डे पलानां दशभिः कृतम् ।
ताम्रपात्रमधश्छिद्रं चतुरङ्गुलमुच्यते ॥ ११५ ॥
हेममाषचतुष्केण ग्राह्याऽऽननविस्तृतौ ।
दशाङ्गुलकमुत्सेधे षष्टिमज्जत्यहर्निशम् ॥ ११६ ॥
तत् पात्रं यादृगपि वा यथैवं तच्च गृह्यताम् ।
कपालयन्त्रेणानेन कालो ज्ञेयः स्फुटेन च ॥ ११७ ॥
देवदारुः शिवतरुः खदिरो रक्तचन्दनः ।
शङ्क्वर्थं स्वच्छनिम्बाद्या ग्राह्या यज्ञीयभूरुहाः ॥ ११८ ॥
एवं हस्तोच्छ्रितः शङ्कुरधोहस्तनिखातगः ।
उत्सेधश्चक्षुषा कल्प्यौ द्वादशाङ्गुलवानिति ॥ ११९ ॥
यस्येयत्र स्थितो योऽयं तदग्रे दर्पणे सुखम् ।
दिवा निरूप्यो भास्करौ निरूप्यौ चक्षुषः सुखम् ॥ १२० ॥
तादृक् शङ्कुद्वयं ग्राह्यं यथादिग्भ्रमणास्थितम् ।
ग्राह्यान्तरक्षेपमध्यमागमानां विवेचनैः ॥ १२१ ॥
इति ते कथितं विप्र तथाऽन्यत् तत्परः शृणु ॥ १२२ ॥

इति मयसिद्धान्ते चतुर्थोऽध्यायः ।

समागमो वा युद्धं वा भौमादीनां परस्परम् ।
नो भावीति मुनिश्रेष्ठ चन्द्रेणैव समागमः ॥ १ ॥
समलिप्तौ यदा स्यातां दृक्कर्मांशौ मुहुः समौ ।
तदा तदन्तरक्षेपे मानैक्यार्धसमे सति ॥ २ ॥
अन्योन्यस्पर्शमानत्वादुल्लेख युद्धमेव तत् ।
हीने भेदः समुच्येत चापसव्यं तथाऽधिके ॥ ३ ॥
आरादंशार्धमंशूनां व्याप्तिर्हि तु शशीनयोः ।
आब्रह्माण्ड कपालं तरस्वच्चांशे तद्ग्रहान्तरे ॥ ४ ॥
रश्मिसंमीलनादंशुर्विकलो यद्धिमांशुमान् ।
समागमश्चेत् प्रख्यातस्ताराबिम्बसमागमः ॥ ५ ॥
त्रिज्यांशाङ्गुलपश्चग्रे तिर्यञ्चध्यांशकाङ्गुलम् ।
शलाकां स्थापयेन्मध्ये दण्डमूलं च पश्यता ॥ ६ ॥
सभेदयोगदृश्यौ तौ द्वौ शलाकाग्रयोः खगौ ।
मन.पूर्वे ग्रहाणां चाप्येवं योगं प्रसाधयेत् ॥ ७ ॥
हृपेऽल्पच्छांशके यस्य याम्यः क्षेपोऽशव द्रयात् ।
भवेदप्यधिको भिन्द्याद्रोहिण्याशकटं हि सः ॥ ८ ॥
नाणुरेकोऽपसव्ये चेन्नापसव्यं तदिष्यते ।
तथा समागमेऽणुश्चेदेकोऽसावसमागमम् ॥ ९ ॥
अस्थूलावनणू द्वौ चेदुदक्स्थो दक्षिणस्थितः ।
स्थूलाणुप्रथमप्रख्योऽपीत्येवार्धत्रयं स्मृतम् ॥ १० ॥
साम्येऽपीत्यधिगब्देन सौम्येऽपीह च कीर्तितम् ।

तदुद्दिष्टाविमौ शब्दावुदक्स्थो दक्षिणाश्रितः ॥ ११ ॥
अदोऽमिमान् विवर्णश्च वेपथू रूक्षदर्शनः ।
दुर्बलश्चापि योऽणु, सावस्थूलस्त्वयमन्यथा ॥ १२ ॥
न पीडितश्च(१) स्थूलोऽणुर्वद्दृष्टान्तवाचिकौ ।
इमौ शब्दौ तथा स्यातामुदक्थो दक्षिणाश्रितः ॥ १३ ॥
ताविमावेव याम्यादिस्थूलाख्यत्वं तयोदितम् ।
याम्येऽपि युक्तमेवास्मात् स्थानादिबलमत्र चेत् ॥ १४ ॥
अन्यत्र नैतदित्याज्ञावैकृतात् तत् समीरितम् ।
स्थानादिबलभिन्नाऽत्र व्यर्था नैकाऽपि भा स्मृता ॥१५॥
अप्यणुत्वयेऽप्येवामुष्मिन् स्थितौ सूक्ष्मफलं स्मृतम् ।
समागमेऽपि सव्ये वा स्वल्पौ द्वावपि वेपथू ॥ १६ ॥
स्थौलकटौ विग्रह्णौ द्वावाइीनौ यदि समागमौ ।
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी ॥ १७॥
जगतः कल्पनैवेयं भावाभावाय केवलम् ।
अन्योन्यमपि दूरस्थाः कथं युद्धं प्रकुर्वते ॥ १८ ॥
छादकोऽध.स्थितश्छाद्य उपरस्थः शशी रवेः ।
छादकश्छादिका राज्ञो भूछाया मुनिसत्तम ॥ १९ ॥
यद्येवं प्रतिशल्याभ्त्वं स्यादृशं प्रत्युपप्लवः ।
सम्भवाद्रवितुल्येन्दोर्भूछायातुल्यशीतगोः ॥ २० ॥

छादकौ राहुकेतू तावन्योन्यस्यार्धचक्रगौ ।
एवं यद्युक्तदोषेऽपि नेति चेत् तद्वदन्मुने ॥ २१ ॥
तदा चेच्छुक्लशपान्तादुपरागस्तदाऽन्यथा ।
न चेद् द्विरिन्दोर्मासं प्रत्यर्कस्य प्रतिवत्सरम् ॥ २२ ॥
यद्वैवा एव राहुः स्यान्न ग्राह्यस्तस्य भार्धगः ।
एकैक ग्रहणं मासं प्रतिवर्षं प्रतीति च ॥ २३ ॥
ग्रस्येत वटवल्मीकलत्वेऽङ्के यालिशः फणी ।
तद्वल्मीकस्थितो नास्ति कल्प्यो नार्कग्रहोऽस्ति चेत्॥२४॥
किं न स्याद्ग्रहणं शश्वत् कुतस्तत्र समं सदा ।
ग्रहणान्तरकालानां वैषम्ये किन्तु कारणम् ॥ २५ ॥
बहुप्रलापास्तेनोक्तास्तस्मादिदविरोधिनः ।
निमित्तकारणं राहुर्द्वयोरेवोपरागयोः ॥ २६ ॥
विक्षिप्त फणिना चन्द्र सूर्यमाच्छादयेदथ ।
भेदः स्वयं वा भूच्छायां प्रविशेद्ग्रहणं भवेत् ॥ २७ ॥
शीघ्रासौ शशी सूर्यं छायापश्चिमतोऽपि वा ।
प्रागत्यतीत्य तत्पश्चाद्ग्रहणा भास्करस्य च ॥ २८ ॥
प्राग्मोक्षः शीतगोस्तुप्राग्ग्रहणं प्रत्यगेव हि ।
अल्पेन्दुमर्कविक्षेपवरणानियमाः क्रमात् ॥ २९ ॥
फणीनभगणैक्याद्धि निमित्तग्रहणाधिपाः ।
समलिप्तौ यदाच्छादयच्छादकौ तच्च चेद्भुजः ॥ ३० ॥
विक्षेपजनको राहुर्धनः सोमग्रहस्तदा ।

अर्कग्रहोऽष्टांशकतद्दृष्टयंशान्नाधिकः स तु ॥ ३१ ॥
सर्वत्र सोमग्रहणं सोममेव हि दृश्यते ।
उभयोरन्तराभावाद्भूछायावान्तरं शशी ॥ ३२ ॥
क्षेपो यदा तत्समः स्यात् तेनोद्देश्य उपप्लवः ।
पूर्वापरान्तराभावाद्भावो लम्बनस्य च ॥ ३३ ॥
एवंप्रतिपदोरेव ग्रासमोक्षौ विधोर्मुने ।
न हि लम्बनहेतुः स्यादेव याम्योत्तरान्तरम् ॥ ३४ ॥
तस्मिन् सति त्रिपादस्थोऽप्युपरागोऽस्ति तद्दिने ।
तावत्कालस्तु याम्योदगन्त्या तत्त्वात् प्रसिद्ध्यति ॥३५॥
तदन्तरेण नासीतेः सम्भवाद्भास्करग्रहे ।
केन्द्रविप्रयुतोना दिक् तुल्यभेदे ग्रहान्तरम् ॥ ३६ ॥
साक्षाच्चोदङ्मध्यलग्ने क्रान्त्योः साम्येन सम्भवः ।
पूर्वापरान्तराभावान्मध्याह्ने माऽस्तु लम्बनम् ॥ ३७ ॥
अस्त्यन्यदा तु पूर्वाह्ने ग्रासमोक्षौ तु दर्शगौ ।
प्रतिपद्यपराह्ने तु तयाऽस्तो वा तदा क्वचित् ॥ ३८ ॥
अर्केन्द्वोरतिदूरत्वात् समीपत्वादिदं भवेत् ।
दृक्कर्मणैव तत्सिद्धौ मध्यग्रहणसङ्गतौ(१) ॥ ३९ ॥
लम्बनावनती न स्तामपि सत्यन्तरद्वये ।
दृष्टलम्बनमन्यत्र यदोष्टाऽवनतिर्भवेत् ॥ ४० ॥
दृक्कर्म च तथा विप्र प्रत्यक्षं च ततस्तथा ।

(१) मध्यमग्रहसङ्गतौ—पा० २ पु० ।

दृक्कर्मणा द्वे च कृते व्यर्के भासति तादृशे ॥ ४१ ॥
स्थाच्चवनतेर्भावोऽखण्डत्वाच्च यथा तथा ।
मध्यगा मध्यलग्नस्य नतज्याऽर्द्दखेऽर्कवत् ॥ ४२ ॥
चरसंस्कृतलग्नज्या लब्धज्या चेद्भवत्यपि ।
अन्त्यक्रमज्योदयज्या त्रिज्या चेन्मध्यमौर्विका ॥ ४३ ॥
कोटिजीवोदयज्या स्यादित्यूह्यं कोटिजास्फुटम् ।
मध्यज्याकर्णजा दोर्ज्याहृक्क्षेपो दक्षिणोत्तरः ॥ ४४ ॥
चन्यस्य दिङ्मध्यजीवाद्युज्याविक्षेपवर्गयोः ।
विक्षेपो दृग्गतिर्मूलं शङ्कुरित्यपि चोच्यते ॥ ४५ ॥
नतांशस्फुटदोःकोटिजीवे दृक्क्षेपदृग्गती ।
छिदः शङ्कुहृते कुज्या हृतिश्छेदसमा यदि ॥ ४६ ॥
मध्यलग्नार्कोत्थदोर्ज्याकोटिलम्बननाडिकाः ।
महत्त्वात् प्राग्गतेरिन्दुर्दृशान्तात् प्राक्समोऽमुना ॥४७॥
प्राक्कपालेऽन्यथा पश्चात् तथा स्याद्युतिरच्युत ।
लम्बनं पर्वतः शोध्यं प्राक्कपालेऽन्यथा परे ॥ ४८ ॥
असकृल्लम्बनं यावद्भिः सिद्धं सकलं समम् ।
रवीन्द्वोर्लम्बनं चेति हरिजं चेति भास्करः ॥ ४९ ॥
वारयामास शब्दाभ्यामन्ययोगेषु लम्बनम् ।
अग्रस्तोऽर्को विमुक्तो वा दिवा नक्तं च कालयोः ॥५०॥
व्यस्ते चयापचयं दृश्यः पापिभिः सप्तमा इव ।
स्थिरीकृतं तद्धरिज लम्बनं स्याद्दृशान्वितम् ॥ ५१ ॥

पितृभुक्तिविहीनानामर्वं वा सर्वलम्बनम् ।
स्थिरीकृता दृग्गतिज्या सप्ताष्टाङ्कहृताऽपि वा ॥ ५२ ॥
अथ क्षेत्रार्धमाच्छेद्यं खाष्टमेन स्थिरीकृतम् ।
यदीदृग्ज्याप्रभवो विना वादृग्ज्यया मुने ॥ ५३ ॥
मेषलग्नान्तरचैत्रज्यातो वा ज्येकतः परम् ।
वर्गयोरुन्नतदृक्क्षेप एष मार्गः सदा न सन् ॥ ५४ ॥
क्वचित् सन्नपि तत्रैतन्न क्वचिद्वाऽपि सन् किल ।
दृक्क्षेपत्रिभजा चेत् स्यान्मध्यभुक्त्यन्तरस्य च ॥ ५५ ॥
अर्कविम्बोः पञ्चदश नतिर्वा चित्कृतिर्मुने ।
दृक्क्षेपसमलंशो वाऽत्र नतिर्ग्रहणं ततः ॥ ५६ ॥
नतिरल्पान्तरावान्यमार्गाभ्यां न हि दोषदा ।
दृश्यते द्वादशांशोऽपि स स्वच्छाद्ग्रह एव हि ॥ ५७ ॥
इन्दोर्लिप्तात्रयं वार्कस्योपात्ताद्गतिरत्र न ।
ग्रहणं नामभेदो हि दुर्लक्ष्यमपि पुण्यदम् ॥ ५८ ॥
सैनान्तरालकग्रासो ग्राह्यं चेन्न समो यदि ।
सर्वग्रासोऽपि तिग्मांशोः क्वचिद्देशान्तरं सुत ॥ ५९ ॥
अर्केन्द्वन्तरसद्भावात् स्पर्शमात्रोऽपि नास्ति हि ।
पर्वाधिपतिसंख्यास्तु पातालग्रहणं हि तत् ॥ ६० ॥
स्नानादिषु तु न ग्राह्यं शुभेषु ग्रहयुद्धवत् ।
ग्रहणं ग्रहयुद्धं वा तत्तद्देशफलप्रदम् ॥ ६१ ॥
कृत्स्नं ग्रासाधिकं चान्त्यादिमर्दग्रहणं च तत् ।

यावद्बिम्बैकदेशेन तावदेव भवेत् तदा ॥ ६२ ॥
विमर्दग्रहणं तावत्कालो वैमर्दिकः स्मृतः ।
चन्द्रबिम्बाधिकं सूर्यबिम्बमध्ये न कर्बुरम् ॥ ६३ ॥
तदेतत् कङ्कणाकारं कङ्कणग्रहणे मुने ।
तत्र कङ्कणकालः स्यादसौ वैमार्दिकस्तु यः ॥ ६४ ॥
स्थितिकालो भवेत् तावान् यावत् तिष्ठत्युपप्लवः ।
कर्णमानैक्यमानान्तरार्धक्षेपो भुजः स्वकः ॥ ६५ ॥
अन्या पूर्वापरा कोटिर्गत्यन्तरसमा यदि ।
स्थित्यर्धं च विमर्दार्धं क्रमात् स्यादष्टनाडिकाः ॥ ६६ ॥
कङ्कणार्धं विमर्दार्धं कङ्कणग्रहणे भवेत् ।
ग्रासो मोक्षो विमर्दार्धे नोभयुक्तः स एव सः ॥ ६७ ॥
निमीलनोन्मीलनाख्यं कङ्कणार्धेन तत् तथा ।
मुहुर्मुहुः क्रताः सर्वे स्फुटाः सन्तु तदा मुने ॥ ६८ ॥
असकृल्लम्बनं सूर्यग्रहणेऽन्ये सकृत् तथा ।
मध्यग्रासादन्तरं वा स्थित्यर्धादि स्फुटं स्वकम् ॥ ६९ ।
स्थित्यादौ तु धनं वा स्यात् खमध्यहरिजान्तरम् ।
मध्याधिकोने क्षितिजखमध्यदिशि लम्बने ॥ ७० ॥
स्थित्यर्धादावृणं तस्मैदन्यथा हरिजान्तरम् ।
धनं कपालभेदेऽपि लम्बनैक्यं भवेन्मुने ॥ ७१ ॥
इत्थं स्फुटं वा स्थित्यर्धं विमर्दार्धं च नारद ।
स्थित्यर्धं लम्बनं चापि युगपच्चासकृत् स्फुटम् ॥ ७२ ॥

अहो गत्यन्तरं कोटिः कुमध्येऽष्टममञ्चनम् ।
तदर्कयहृतो मध्यस्थित्यर्धम स्फुटं मुने ॥ ७३ ॥

स्फुटस्थित्यर्धं संभक्तं क्षेपो बाहुः श्रवस्ततः ।
ग्रासं तात्कालिकं प्रोज्झ्य मानैक्यार्धात् ततोऽन्यथा॥७४॥

इष्टग्रहणकाल. स्याद्ग्रासे स्पर्शमोक्षयोः ।
तत्र काल. स्फुटो याह्यो ग्रास उन्मीलनं तथा ॥ ७५ ॥

घतीर्धेऽत्तविधिः कल्पो मध्याह्नात् तत ऊर्ध्वग ।
याम्योत्तरं मुनिश्रेष्ठ लम्बनं तद्ग्रहान्तरम् ॥ ७६ ॥

नतोत्क्रमज्या द्युज्याघ्नी त्रिज्याप्ता क्रमकार्मुकम् ।
वलनं तद्भवेत् प्रत्यक्कपाले दक्षिणं हि तत् ॥ ७७॥

उत्तराभिमुखो याति तस्मिन् प्रतिपदं ग्रहः ।
प्राचीमध्यं ततं स्थानं याम्य प्रत्यङ्मादिशेत् ॥ ७८ ॥

उत्तरं वलनं प्राच्या वेलावलनमेव तत् ।
आद्यं क्रान्तिचतुर्विंशमध्यं वलनमापनम् ॥ ७९ ॥

यद्वेलावलनं प्राच्या उत्तरोत्तरतो ग्रह ।
उदेति मकरादौ तत् प्राक् पश्चात् स्वर्णमत्र तत् ॥८०॥

अन्यदोदेति कर्कादावन्यादावत्र तत्र तत् ।
इति निष्पन्नवलनं पारमार्थिकमुच्यते ॥ ८१ ॥

तत् क्रमज्या त्रिभज्या चेद्बोधयोर्वलनाङ्गुलम् ।
सप्तत्या साङ्गुलं वा स्यादत्यल्पं यत् तदन्तरम् ॥ ८२ ॥

नान्यजोत्क्रमणा कार्या नतासोः सन्निभग्रहात् ।
वेदास्तु प्रवदन्त्येवं नतकालापवादतः ॥ ८३ ॥

इति ब्रह्मसिद्धान्ते पञ्चमोऽध्याय ।

छेद्यकेन विना छेद्याः सुस्फुटा ह्युपरागयोः ।
न ज्ञायन्ते यतस्तस्माच्छेदकज्ञानमुच्यते ॥ १ ॥
समभूदिङ्मध्यबिन्दोः सप्तवर्गाङ्गुलेन च ।
मानैक्यार्धेन वृत्तानां ग्राह्यार्धेन त्रयं लिखेत् ॥ २ ॥
तन्मध्यमं समासाख्यं बहिष्कं वलनाश्रयम् ।
ग्राह्यमण्डलमध्यस्थं दिशः प्रागेव साधिताः ॥ ३ ॥
यत्प्राच्या वलनं देयं तद्यथादिशमेव हि ।
पश्चाद्यत् तद्विपर्यस्त वलनं प्राक् प्रसिद्धये ॥ ४ ॥
आद्यन्तमध्यवलनैस्त्रिभिरेवाखिलं भवेत् ।
निमीलनोन्मीलनाभ्यां न किञ्चिदपि नारद ॥ ५ ॥
विक्षेपाये यतश्चन्द्र परस्मादविसृज्य तत् ।
प्राङ्मुखं मध्यवलनं तद्विक्षेपैकता यदि ॥ ६ ॥
भेदे पश्चान्मुखं देयमिन्दोर्भानोर्विपर्ययात् ।
सव्यापसव्यमार्गाभ्यां तथा तत्रासदर्शनात् ॥ ७ ॥
तिस्रो रेखामध्यबिन्दुं प्रापयेद्वलनत्रयात् ।
तत्प्रमासमयुक्तिभ्यां विक्षेपौ ग्रासमोक्षिकौ ॥ ८ ॥
वलनाभिमुख बिन्दोः सविक्षेपं च मध्यगम् ।

विन्यस्तं विलिखेच्चापं विक्षेपत्रितयाग्रगम् ॥ ९ ॥
दृष्टच्छन्नोनमानैक्यदलसंमितयाऽऽस्पदम् ।
शलाकया मध्यबिन्दोर्नीत्वा चापे ततो लिखेत् ॥ १० ॥
ग्राह्यकार्धेन तद्बिम्बं स्थानं चेत् स्पर्शमोचयोः ।
निमीलनोन्मीलनयोर्विन्द्याद्ग्रहणमीप्सितम् ॥ ११ ॥
स्वच्छत्वाद्विधोः सूर्यग्रहणं कृष्णमेव तत् ।
ध्वान्तं छादकमिन्दोर्यद्विशेषोऽयं विधोस्ततः ॥ १२ ॥
धूम्रं कृष्णं क्रमात् कृष्णं कृष्णं ताम्रं विनिर्दिशेत् ।
किञ्चिदूनाधिकैः पादैस्त्वर्द्धं कपिलमेव तत् ॥ १३ ॥
नदेयं यस्य कस्यापि रहस्यं शास्त्रमुत्तमम् ।
अर्थलुब्धाय मूर्खाय साहङ्काराय पापिने ॥ १४ ॥
गुरुभक्तिविहीनाय पुत्त्रायापि वदेन्न हि ।
एतद्देयं सुशिष्याय मुने वत्सरवासिने ॥ १५ ॥

इति श्रीमाकल्यसंहितायां ब्रह्मनारदसंवादे ब्रह्मसिद्धान्ते
द्वितीये प्रश्ने षष्ठोऽध्यायः ॥

समाप्तोऽयं ग्रन्थः ।

